रूपासत्तिरपि न हेतुः । न च तत्र द्वितीयान्तपदाध्याहार एव कल्प्यते । पदज्ञानस्य वृत्त्या तदर्थोपस्थितेश्च कल्पनापेक्षया लाघवेनार्थोपस्थितेः कल्पनात् । न च तण्डुलं पचतीत्यत्र स्मृतकलायादेरप्यन्वयापत्तिः । तात्पर्यज्ञानात् । अन्यथा तवापि दैववशस्मृतकलायपदोपस्थापितेनान्वयबोधापत्तिः । न च पुष्पेभ्य इत्यत्र स्पृहधातुयोग एव चतुर्थ्याः साधुत्वात् स्पृहयतिपदाध्याहार एवेति वाच्यम् । तथाप्यन्यत्र पदाध्याहारसमर्थनात् । किं च प्रकृते साधुत्वार्थं तदपेक्षणेऽपि शाब्दबोधार्थं तदनपेक्षणात् । न चैवं सति तण्डुलः कर्मत्वं पाकः कृतिरित्यादितस्तण्डुलकर्मकपाककृतिबोधापत्तिरिति वाच्यम् । तत्तद्विभक्त्यादिसमभिव्याहारशून्यपदाजन्यतण्डुलकर्मत्वाद्युपस्थितीनां तादृशबोधे हेतुत्वादिति चेन्न ।

लाघवेन तण्डुलवृत्तित्वेन ज्ञातपदोत्तरविभक्तिजन्यकर्मत्वोपस्थितित्वेनैव तण्डुलप्रकारककर्मत्वविशेष्यकबोधे हेतुत्वान्न तु तण्डुलपदोत्तरद्वितीयादिशून्यतण्डुलपदजन्योपस्थितित्वेन गौरवात् । एवमन्यत्रापि । एवं तण्डुलपदोत्तरद्वितीयादिविभक्तिरूपाकाङ्क्षाया हेतुत्वादपि पदाध्याहारस्यैव सिद्धेः ।

ननु तण्डुलस्य पाचक इत्यत्र षष्ठ्याः कर्मत्वे लक्षणया तण्डुलप्रकारककर्मत्वविशेष्यकबोधः । तत्र लाक्षणिकाननुभावकत्वेन विभक्तेरननुभावकत्वेनोक्ताकाङ्क्षाया हेतुत्वे व्यभिचार इति चेन्न । तथाप्यर्थाध्याहारासिद्धेः । किं च सर्वलाक्षणिकानुरोधेन लाक्षणिकस्याप्यनुभावकत्वाच्च । किं चार्थाध्याहारवादिमते लिङः कार्ये शक्तिर्न स्यादनुमानादेरुपस्थित्यापि शाब्दबोधसम्भवादिति दिक् ।

अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यत्र राज्ञः पुत्रान्वये तात्पर्ये पुरुषेणान्वयाबोधात्तात्पर्यज्ञानं शाब्दबोधे हेतुः ।

तच्च यद्यपि न तत्प्रतीतिफलोपहितत्वरूपजनकत्वम् । अन्योन्याश्रयात् । नापि तत्प्रतीतिस्वरूपयोग्यत्वं तत् । नानार्थे विनिगमनापत्तेः । स्वरूपयोग्यतावच्छेदिकायाः शक्तेः लाक्षणिकेऽभावेन तस्य लक्षणीयपरत्वाभावापत्तेश्च । न च गङ्गापदस्मारितपूरेण तीरस्मृतेर्न गङ्गापदस्य तीरपरत्वमिति वाच्यम् । तीरस्यापि पदार्थत्वेन विभक्त्यर्थान्वयानुपपत्तेः । गच्छ गच्छसीत्यादेर्मुख्यपरत्वापत्तेश्च । तथापि तत्प्रतीतीच्छयानुसंहितत्वं तत्परत्वरूपं तत्तात्पर्यकत्वम् । तच्च तच्छाब्दबोधेच्छाप्रयोज्यव्यापारप्रयोज्यज्ञानविषयत्वम् ।

व्यापारस्तु क्वचिदुच्चारणं क्वचिल्लिप्यादिः । तज्ज्ञानं शाब्दबोधे हेतुः ।

ननु तात्पर्यज्ञानं न शाब्दबोधे हेतुः । तेन विनापि मूर्खोच्चारितवाक्याच्छुकादिवाक्याच्चान्वयबोधात् । न च तत्रेश्वरतात्पर्यज्ञानमेव हेतुः । तस्य फलोन्नेयतया प्रथमं दुर्ग्रहत्वात् । न चैवं सति नानार्थे विनिगमना न स्यात् । तात्पर्यग्राहकप्रकरणादेरेव विनिगमकत्वादिति चेन्न । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञः पुरुषान्वये तात्पर्यस्य सन्देहे व्यतिरेकनिश्चये च पुरुषेण सहान्वयाबोधात्तात्पर्यभ्रमे चान्वयबोधात्तात्पर्यनिश्चयस्यान्वयव्यतिरेकाभ्यां हेतुत्वात् । न च शुकादिवाक्ये व्यभिचारः । तत्रेश्वरेच्छामादाय तत्सत्त्वात् । तदज्ञाने तूक्तप्रकरणाभावेन तत्र शाब्दबोधाभावात् । किं तु पदार्थोप-

स्थितिमात्रं घटः कर्मत्वमित्यादाविव । अत एव नानार्थे उभयोर्योग्यत्वे उभयोरन्वयबोधो भवत्येव तात्पर्यग्रहस्तु प्रवृत्तावुपयुज्यते वक्त्रभिप्रेतानयनमिष्टसाधनमितिज्ञानात् प्रवृत्तेरिति परास्तम् । विष्णुतात्पर्यकाद्धरिदर्शनमिष्टसाधनमिति वाक्यादुभयत्र प्रवृत्त्यापत्तेः । तात्पर्यविषयार्थशाब्दबोधस्यैवानुभवाच्च । तात्पार्यग्राहकप्रकरणादेरननुगमान्न शाब्दबोधे हेतुत्वम् । तात्पर्यग्राहकत्वेनानुगमे तु लाघवात्तात्पर्यग्रहस्यैव हेतुत्वमिति दिक् ।

केचित्तु तात्पर्यज्ञानं विनापि शुकमूर्खाद्युच्चारितवाक्यादन्वयबोधान्न शाब्दबोधत्वावच्छिन्ने तात्पर्यज्ञानं हेतुः । किं तु नानार्थस्थलीयशाब्द इत्याहुः । तन्न । सैन्धवादिपदजन्यतुरगलवणाद्युपस्थितिकालीनसैन्धवादिपदजन्यतुरगशाब्दबोधे तुरगतात्पर्यग्रहे उभयोरन्वयबोधापत्तिः । न चेष्टापत्तिः, सकृदुच्चरितः शब्दः सकृदर्थप्रत्यायक इति नियमभङ्गापत्तेरिति चेन्न । प्रमाणसिद्धतादृशनियमनिश्चये विशेषदर्शनात् । सैन्धवादिपदं कदा उभयबोधं जनयतु एकानुसन्धानेन चोभयबोधं जनयत्विति नाभिप्रायः, किं तूभयबोधं जनयत्विति । तस्य चावृत्त्यान्वयबोधेनाप्युपपत्तेः । न च तादृशनियमे मानाभावः । घटावित्यत्र एकघटपदोपस्थाप्यघटद्वये द्वित्वान्वयबोधसम्भवेनैकशेषानुशासनवैयर्थ्यापत्तेः ।

ननु सकृदितिव्युत्पत्तौ सकृत्त्वं नार्थविशेषणं जातिविशिष्टव्यक्तिबोधानापत्तेः । न वृत्तौ घटं पटं जानातीत्यादावावृत्त्या बोधस्यानुपपादनात् । अत एव वृत्तिविशेष्येऽपि न सकृत्त्वमिति चेन्न । एकं पदानुसन्धानमेकविधेयावच्छिन्नमेव स्वार्थोद्देश्यकबोधं जनयति एकोद्देश्याव-

च्छिन्नमेव स्वार्थविधेयकबोधं जनयतीति व्याप्तिद्वयाङ्गीकारस्तेन घटं पटं जानातीत्यत्र काष्ठं स्थाली पचतीत्यादौ च नावृत्तिं विना बोधः । न च सैन्धवान् द्रव्यमित्यादितो लवणतुरगवदेकोद्देश्यकद्रव्यबोधापत्तिरिति वाच्यम् । वृत्तिविशेष्यमेकमेवानुभावयतीति नियमस्यापि स्वीकारादत एव न सरूपाणामेकशेषवैयर्थ्यम् । न च मृगो गच्छतीत्यादौ सामान्यविशेषोभयशक्तमृगपदात् पशुत्वमृगत्वोभयरूपेण एकविशेष्यकबोधापत्तिरिति वाच्यम् । वृत्तिविशेष्यतावच्छेदकमेवानुभावयतीति नियमान्तरस्याप्यङ्गीकारात् । अत्र तुरीयनियमेनैव तृतीयवारणे तद्वैयर्थ्यमिति कश्चित् । न त्वेकमेव शाब्दबोधं जनयतीति नियमान्तरं, प्रमाणाभावात् । न च श्वेतो धावतीत्यादिशब्दश्लेषे पदभेदावृत्तिर्न स्यात्, इष्टापत्तेः ।

अत्र पुष्पवन्तपदभेदो निवेश्यो व्याप्ये । तेन तत्र न व्यभिचारः । न तु पुष्पवन्तपदस्य चन्द्रसूर्यवृत्तिद्वित्वं शक्यतावच्छेदकम् । चन्द्रः सूर्यश्चेति प्रत्ययात् । न च पुष्पवन्तपदात् केवलं चन्द्रस्य सूर्यस्य च बोधापत्तिरिति वाच्यम् । पुष्पवन्तपदं चन्द्रे सूर्ये शक्तमिति ज्ञानस्य तज्जन्यपदार्थोपस्थितेर्वा चन्द्रत्वप्रकारकत्वविशिष्टसूर्यत्वप्रकारकत्वावच्छिन्नशाब्दबोधे हेतुत्वात् । अत एव केवलं चन्द्रे शक्तिज्ञानात् केवलं चन्द्रबोध इति प्राञ्चः ।

वस्तुतस्तु आवृत्तिस्वीकारेऽपि चैत्रौ गच्छत इत्यत्र द्वित्वसंख्यायाश्चैत्रयोरुभयोरुद्देश्यतया बोधो न स्यात् । अत एव एकपदे नोद्देश्यविधेयभाव इत्युक्त्यापि न निस्तारः । आख्यातोपस्थाप्यद्वित्वोद्देश्यतायाः सत्त्वात् । अत एव व्यासज्यवृत्तेरुद्देश्यता व्यासज्यवृत्तिरेकैव ।

एकोद्देश्येत्यनैकोद्देश्यतावत्त्वम् । एवं घटौ द्वावित्यत्र व्यासज्यवृत्तिविधेयतानिरूपितोद्देश्यताया व्यासज्यवृत्तित्वादिति प्रत्युक्तम् । समवायेन द्वित्वनिरूपितोद्देश्यतायाः प्रत्येकं सत्त्वात् ।

न च व्यासज्यवृत्तिसम्बन्धेन विधेयोद्देश्यताया व्यासज्यवृत्तित्वम् । मानाभावात् । अत एव पुष्पवन्तपदभेदवत् द्वित्वादिपदभेदो निवेश्य इति निरस्तम् । न च घटत्वेनोपस्थिते सहस्रसंख्यान्वयवद्द्वित्वादेरन्वयसम्भवात् सरूपाणामेकशेषइत्यस्य व्यर्थतेति वाच्यम् । पयसि इत्यत्र जलत्वेन दुग्धत्वेन च जलदुग्धयोरुपस्थित्यर्थं तत्सार्थकत्वात् । तथा चैका या वृत्तिस्तद्विषयीभूतमर्थमनुभावयतीत्येव नियमः प्रमाणसिद्धः पर्यवस्यतीति ।

वस्तुतस्तु तादृशनियमास्वीकारेऽपि रामरामौ पयःपयसीत्यादेः साधुत्ववारणार्थं सरूपाणामिति सूत्रम् । अन्यथा तादृशप्रयोगस्यापि साधुत्वापत्तेरिति ध्येयम् । आवृत्तिश्च स्वस्थानस्थितस्य पुनरनुसन्धानम् । स्थानान्तरस्थस्यानुसन्धानमनुषङ्गः । स्थानान्तरस्थस्य स्वस्थानेऽनुसन्धानमनुवृत्तिः । एतत्त्रयं श्रुतपदानां, तत्र पूर्वं लघीयः । अश्रुतपदानामनुसन्धानमध्याहारइति प्राञ्चः ।

तन्न । विशेषदर्शनस्यासार्वत्रिकत्वेन एकदान्तर्भावेणाभिप्राये युगपद्बोधस्य दुर्वारत्वात् । किं चावृत्त्यनुरोधादेकोच्चारणान्तर्भावेनाभिप्रायाद्युगपद् उभयबोधो दुर्वारः सामग्रीसत्त्वात् प्रथममेतस्य चरममेतस्येत्यत्र नियामकाभावात् । धारावाहिकस्थले प्रथमक्षणे कार्यतावच्छेदकावच्छिन्नस्य जायमानत्वेन तत्रापादकाभावाद् व्यक्तिस्थानीयापत्तेरदूषणत्वस्वीकारात्, आवृत्तिस्तु यत्र क्रमिकबोधाभिप्रायस्तत्रेति दिक् ।

तच्च तात्पर्यमस्माकं लौकिकवाक्ये स्वतन्त्रम्, वेदे ईश्वरस्य ।

मीमांसकास्तु पूर्वपूर्वाध्यापकतात्पर्यपूर्वकमेव वेदेतात्पर्यमिति परतन्त्रमनादित्वादिति । तन्न । कार्यद्रव्यानधिकरणभावकार्याधिकरणरूपप्रलयस्य श्रुतिसिद्धतया तात्पर्यस्यानादित्वासिद्धेः । भावकार्यानधिकरणकालरूपमहाप्रलयेप्यागमसिद्ध एवेति दिक् ।

वेदत्वं च न शाखासमुदायत्वं वेदैकदेशस्य शाखात्वेनान्योन्याश्रयात् । नाप्यदृष्टजनकतावच्छेदकावच्छिन्नत्वे सति मीनशरीरावच्छिन्नेश्वरोक्तजातीयत्वम् । ईश्वरोक्तलौकिकवारणाय सत्यन्तम् । गीतादिवारणाय मीनशरीरावच्छिन्नेति ईश्वरपदं स्वरूपकथनायेति । मीमांसकमतलक्षणासिद्धेः । किं त्वखण्डोपाधिः । तस्य च यावत्स्यभियुक्तानां वेदत्वव्यवहारः तत्रैव पर्याप्तेस्तत्पाठश्रवण एव शूद्रादीनां प्रत्यवायः ।

केचित्तु अभियुक्तैर्वेदत्वेन परिभाषितत्वं वेदत्वं धातुत्वाख्यातत्वादिवत् परिभाषागर्भमेव इत्याहुः । तादृशवेदस्य पौरुषेयत्वं "तस्मात्तपस्तेपानाच्चत्वारो वेदाश्चाजायन्तच्छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायते"त्यादिश्रुतेः । वेदाः पौरुषेयाः वाक्यत्वात् भारतवदित्यनुमानात् सिद्धम् ।

अत एव

स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा ।<br>
शिवाद्या ऋषिपर्यन्ताःस्मर्तारोऽस्य न कारकाः ।

इत्यादिस्मृत्या नाऽपौरुषेयत्वसिद्धिः । तस्याः श्रुतिविरोधेनान्यत्र तात्पर्यात् । स्वयम्भूत्वं न नित्यत्वं किं तु

नित्यज्ञानवज्जन्यत्वं जन्यज्ञानवदजन्यत्वं वा । अस्मदाद्यननुभूयमानजन्यत्वमिति केचित् । शिवाख्या इत्यत्र शिवनामा कश्चिदृषिः शिवशब्देनोक्तः । अतद्गुणसंविज्ञानबहुव्रीहिर्वा । न च श्रुत्या पौरुषेयत्वसिद्धिवद्विज्ञानमानन्दमित्यादिश्रुत्या आनन्दस्य सिद्धिः स्यादिति वाच्यम् । लाघवेन सुखत्वावच्छेदेन पुण्यजनकत्वग्रहे तस्य लक्षणया दुःखाभावपरत्वादिति दिक् ।

ननूत्पादविनाशकल्पनागौरवभीत्या शब्दस्य नित्यत्वसिद्धौ शब्दसमुदायरूपवेदस्य वाक्यार्थज्ञानादिमज्जन्यत्वरूपपौरुषेयत्वसिद्धिर्नागमादपीति चेन्न । वर्णात्मकः शब्दोऽनित्यः समवेतत्वे सत्युत्पत्तिमत्त्वाद् घटवद् इत्यनुमानात्तत्सिद्धेः । उत्पन्नो गकारो विनिष्टो गकार इति प्रतीत्या तस्योत्पादविनाशसिद्धेश्च ।

न चासौ भ्रान्तिः, बाधकाभावात् । न च स एवायं गकार इति प्रत्यभिज्ञा बाधिका । तस्या गवृत्तिगत्वावच्छिन्नभेदाभावविषयत्वेनाबाधकत्वात् । तथा सति गकारोऽयमिति स्यान्न तु सोऽयमिति चेन्न । सोऽयमित्यत्र तद्वृत्तिगत्वावच्छिन्नाभेदस्य विषयत्वात् । गकारोऽयमित्यत्र गत्वावच्छिन्नाभेद एव विषयो न तु गत्वे तद्वृत्तित्वमपि । यत्र तु जातौ जातित्वभानसामग्री तत्र तज्जातीयोऽयमितिधीः संसर्गस्तत्तज्जात्यवच्छिन्नभेदाभावः । तद्व्यक्तित्वावच्छिन्नभेदाभावो वा । न चैकस्मिन्नपि तज्जातीयोऽयमिति स्यात् । इष्टत्वात् । गभिन्नत्वे सति गवृत्तिजातीयाभेदस्य भानाङ्गीकारान्न तथाप्रत्यय इत्यन्ये । किं चोत्पादविनाशप्रत्यययोरप्रामाण्यापेक्षया प्रत्यभिज्ञाया एवाप्रामाण्यमित्यस्यापि सुवचत्वात् ।

वस्तुतस्तु विलक्षणवायुसंयोगादीनां गत्वादिकमेव

कार्यतावच्छेदकं न तु गप्रत्यक्षादिकमित्यादिशब्दानित्यत्वसाधकानि द्रष्टव्यानि । एतेन शब्दो नित्यो व्योमैकगुणत्वाद्व्योमेतरासमवेतगुणत्वाद्वा व्योमपरिमाणवदिति निरस्तम् । येन रूपेण वर्णानां स्फोटव्यञ्जकत्वं तेन रूपेणार्थप्रत्यायकत्वेनैवोपपत्तावतिरिक्तनित्यस्फोटेऽपि न मानमिति दिक् ।

भट्टास्तु शब्दो द्रव्यं साक्षात्सम्बन्धेन प्रतीयमानत्वादित्याहुस्तन्न । अप्रयोजकत्वात् । अत एव निस्पर्शद्रव्यत्वेन शब्दस्य नित्यत्वसाधनमपि प्रत्युक्तमिति दिक् ।

स च शब्दो द्विविधः । प्रवर्तकोऽप्रवर्तकश्च । प्रवर्तको विधिः । तदन्योऽप्रवर्त्तकः । प्रवर्तकत्वं च प्रवृत्तिजनकेच्छाजनकज्ञानजनकत्वेन । प्रवृत्तिजनकेच्छा च कृतिसाध्यत्वप्रकारिका । तज्जनकं कृतिसाध्यत्वप्रकारकं ज्ञानं न तु कृत्यसाध्यत्वज्ञानाभावो गौरवात् । इच्छायाः समानप्रकारकधीसाध्यत्वेन कृतिसाध्यत्वप्रकारकज्ञानाभावकाले चिकीर्षानुदयाच्च । अतस्तद्विषयः कृतिसाध्यत्वं विध्यर्थः ।

न च विषभक्षणादौ कृतिसाध्यत्वज्ञानात् प्रवृत्त्यापत्तिस्तद्वारणार्थं बलवदनिष्टाननुबन्धित्वेन कृतिर्विशेषणीयेति चेन्न । इष्टाजनके बलवदनिष्टाननुबन्धिकृतिसाध्यत्वेन ज्ञाते प्रवृत्त्यापत्तेः । इष्टाजनकत्वेन ज्ञातस्य कृतिर्बलवदनिष्टजनकैव कष्टकर्मेति न्यायादिति चेन्न । अस्तु तथा न त्विष्टाजनकत्वेन ज्ञानदशायां तदीयकृतौ बलवदनिष्टजनकत्वज्ञाननियमो मानाभावादिति वाच्यम् नित्ये या प्रवृत्तिस्तत्र शुचिविहितकालजीवित्वप्रतिसन्धानजन्यं कार्यताज्ञानं हेतुः । अन्यत्रेष्टसाधनतालिङ्गकमिष्टसाधनताज्ञानकालीनं वा कार्यताज्ञानं हेतुरिति नोक्तदोषः

न चेष्टसाधनत्वविषयकं कार्यताज्ञानमेव हेतुरस्तु लाघवादिति वाच्यम् । साध्यत्वसाधनत्वयोर्विरोधेन एकदा एकत्र ज्ञानासंभवात् । प्रवृत्तिसामान्ये च कार्यताज्ञानं बलवदनिष्टाननुबन्धित्वनिश्चयहेतुः । न च कृतिसाध्यताज्ञानत्वेन प्रवृत्तिहेतुत्वे कृतिसाध्यत्वसंशयाद्बहुवित्तव्ययायाससाध्ये प्रवृत्त्यापत्तिस्तन्निश्चयत्वेन प्रवर्तकत्वेऽल्पव्ययायाससाध्यके कृतिसाध्यत्वे संशयात् प्रवृत्त्यनापत्तिरिति वाच्यम् । कृतिसाध्यताज्ञानत्वेनैव हेतुत्वात् । संशये बहुवित्तव्ययायाससाध्ये प्रवृत्त्यभावस्तु बलवदनिष्टाननुबन्धित्वनिश्चयाभावात् । न च बलवदनिष्टाननुबन्धित्वज्ञानत्वेन कृतिसाध्यतानिश्चयत्वेनैव हेतुत्वमस्त्विति वाच्यम् । कृतिसाध्यत्वनिश्चयेऽपि तत्संशयादप्रवृत्तेः । कृतिसाध्यत्वसंशयेऽपि अल्पायासादिसाध्ये तन्निश्चयात् प्रवृत्तेश्च । न चाप्रामाण्यनिश्चयानास्कन्दितकृतिसाधताज्ञानत्वापेक्षया अप्रामाण्यज्ञानानास्कन्दितकृतिसाध्यतानिश्चयत्वेनैव लाघवाद्धेतुत्वमिति वाच्यम् । कृतिसाध्यताज्ञानत्वेनैव हेतु वात् । तत्राप्रामाण्यनिश्चये तु बलवदनिष्टाननुबन्धित्वनिश्चयानुदयादेव न प्रवृत्तिरिति । न तु कृत्यसाध्यता ज्ञानाभावो हेतुः । कृतिसाध्यत्वसन्देहे शब्दात् कृतिसाध्यत्वनिर्णये प्रवृत्त्यभावापत्तेः । कृतिसाध्यत्वनिर्णयाभावविशिष्टत्वेन कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वे चातीव गौरवम् । अत एव कृत्यसाध्यतानिश्चयाभावोऽपि न हेतुः । गौरवादिति प्रभाकरानुयायिनः ।

अपरे तु सनो धात्वर्थगोचरेच्छावाचित्वात् कृतीच्छैव चिकीर्षा सैव प्रवृत्तौ हेतुर्लाघवात् । सा च कृतीष्टसाधनताज्ञानादत इष्टसाधनत्वं विध्यर्थः । तच्च कृताव-

न्वेति एकपदोपस्थाप्यत्वेन सन्निहितत्वात् । न चेच्छायाः समानविशेष्यत्वप्रत्यासत्त्या प्रवृत्तिहेतुत्वान्न कृतीच्छा प्रवर्त्तिका किं तु कृतिसाध्यत्वप्रकारिकेच्छा साध्यत्वसंसर्गेण कृतिप्रकारिकैव वा हेतुरिति वाच्यम् । पाकत्वावच्छिन्नविशेष्यतासंबन्धेन प्रवृत्तौ कृतिनिष्ठविशेष्यता निरूपितपाक त्वावच्छिन्नप्रकारतासम्बन्धेन पाककृतीच्छायाः कृतीच्छाया इच्छाया वा हेतुत्वात् । न च कार्यतावच्छेदककारणतावच्छेदकसंबन्धस्यैकत्वात् पाकत्वावच्छिन्नविशेष्यतासम्बन्धेनैव कृतिप्रकारेच्छाया इच्छाया वा हेतुत्वमिति वाच्यम् । प्रत्यासत्तिलाघवेन वस्तुविशेषमर्दनानुकूलकृतेः समवायेन सुखहेतु वेन कृतौ इष्टसाधनत्वज्ञानात् प्रवृत्तिस्तत्र कृतीच्छैव प्रवर्तिका न तु कृतिविषयेच्छा कृतिविषये इष्टसाधनताज्ञानाभावादित्याहुः ।

अपरे तु अस्तु कृतीच्छापि प्रवृत्तिजनिका, न तु कृतीच्छैव याग इष्टसाधनमित्यादिशब्दादु यागादाविष्टसाधनताज्ञानात् प्रवृत्तिस्तत्र कृताविष्टसाधनताज्ञानमेवेति कृतीच्छाया अभावात् । न चाननुगमः । कृतिप्रकारतानिरूपिता यागत्वावच्छिन्नविशेष्यता या च कृतिनिष्ठविशेष्यतानिरूपिता यागत्वाच्छिन्नप्रकारता एतदन्यतरसम्बन्धेनेच्छात्वेनैव यागत्वप्रकारकप्रवृत्तौ हेतुत्वात् । एवमन्यत्रेत्याहुः ।

नन्वस्तु कृतिसाध्यताज्ञानं चिकीर्षाद्वारा प्रवृत्तौ हेतुः । तथापि प्राणपञ्चकसञ्चारे जीवनयोनिकृतिसाध्ये कृतिसाध्यताज्ञानात् प्रवृत्त्यापत्तिः । न च तत्र मानाभावः । प्राणक्रिया यत्नजन्या क्रियात्वाच्छरीरक्रियावदित्यनुमानात् तत्सिद्धेः । ज्ञानादेर्नाशं प्रति स्वोत्तरोत्पन्नयोग्यजातीयविशेषगुणस्य कारणत्वात्, सुषुप्तेः पूर्वज्ञाना-

दिनाशार्थं तत्स्वीकाराद्वा तत्सिद्धेरिति चेन्न । बाह्यवायुक्रियायां व्यभिचारेणानुमानासिद्धेः । न च तत्रापीश्वरयत्नजन्यत्वसत्त्वान्न व्यभिचार इति वाच्यम् । तर्हि ईश्वरयत्नजन्यत्वेन सिद्धसाधनादर्थान्तरत्वाद्वा ज्ञानादिनाशं प्रति स्वोत्तरोत्पन्नस्यैव हेतुत्वान्न तत्सिद्धिः ।

ये तु जीवनयोनियत्नस्वीकारपक्षेऽपि तत्र प्रवृत्तिवारणाय प्रवृत्तित्वेनकृतिसाध्यताज्ञानं कारणमाहुः । तन्न । तत्र तादृशकृतिसाध्यत्वभ्रमात् प्रवृत्त्यापत्तेर्दुर्वारत्वात् । स्वरूपायोग्यत्वेन प्रवृत्त्यभावस्तु तुल्यः । एवं निवृत्त्यारब्धयत्नेऽपि प्रमाणाभावः । प्रवृत्त्यभावस्यैव निवृत्तित्वात् । न च निवृत्त्यभाव एव प्रवृत्तिरिति वाच्यम् । सुषुप्तौ निवृत्त्यभावसत्त्वात् । प्रवृत्तिकार्यचेष्टाद्यापत्तेः । न च निवृत्तेरसिद्धौ तज्जनकत्वेन द्वेषसिद्धिर्न स्यादिति वाच्यम् । शत्रुं द्वेष्मीति अनुभवात् तत्सिद्धिरिति दिक् ।

नैयायिकास्तु क्रियां विना केवलकृतितः सुखादेरनुत्पादात्फलोपधायकजनकतासम्बन्धेन क्रियावत् कृतेर्जनकत्वं वाच्यम्, तदपेक्षया कृतिसम्बन्धेन क्रियायाः सुखहेतुत्वं, लाघवात् । किं च कृतेः क्रियाद्वारैव सुखादिजनकत्वं वाच्यम् । तथा च क्रियाया अनिष्टसाधनत्वं ज्ञात्वा कृतेरिष्टसाधनत्वं ज्ञातव्यमिति क्रियेच्छायाः सर्वत्र सत्त्वात् सैव प्रवृत्तिहेतुर्विशेष्यतायाः कार्यतावच्छेदककारणतावच्छेदकसम्बन्धत्वे लाघवाच्चेति क्रियायामेवेष्टसाधनत्वं बलवदनिष्टाननुबन्धिकृतिसाध्यत्वं च विध्यर्थोऽन्वेति । न च नित्ये फलाभावादिष्टसाधनत्वाभावः । तत्रापि बहुशः फलश्रुतेः, यत्र च न फलश्रुतिः । तत्र विश्वजिन्न्यायात् स्वर्गस्य प्रत्यवायपरिहारस्य वा फलत्वात् ।

फलकामनाधीनकर्त्तव्यत्वेऽपि प्रत्यवायसाधनीभूताभाव-
प्रतियोगित्वेन नित्यत्वं फलकामनाविरहदशायां प्रवृत्त्य-
भावस्त्विष्ट एव । न च स्वर्गकामनां विना कृताज्ज्योति-
ष्टोमात् स्वर्गोत्पादवारणाय स्वर्गकामनाप्यधिकारिवि-
शेषणं शौचादिवद्वाच्या तथा च कामनाविरहदशायां
ज्योतिष्टोमाकरणेऽपि प्रत्यवायो न स्यात्, अशुचेरिव
तदाप्यनधिकारित्वादिति वाच्यम् । प्रत्यवायोत्पत्तौ स-
न्ध्यावन्दनादिकरणवत् शौचादेरपि कारणत्वं न तु काम-
नायाः प्रमाणाभावात् ।

केचित्तु कामनेतरयावदधिकारवतां प्रकरणमेव
प्रत्यवायहेतुरित्याहुः । बलवदनिष्टाननुबन्धित्वस्य कृति-
विशेषणान्न मधुविषसंपृक्तान्नभोजने प्रवृत्तिः । न वा न
कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणे कृतिसाध्ये इष्टसाधने
विध्यर्थनिषेधानुपपत्तिः । बलवदनिष्टाननुबन्धिकृतिसा-
ध्यत्वाभावसत्त्वाद्विशेषणाभावेन विशिष्टाभावात् । न च
श्येनस्य हिंसात्वेन न स्वरूपबलवदनिष्टसाध्यत्वेन कथं
श्येनेनाभिचरन् यजेतेत्यत्र विधिप्रवृत्तिरिति वाच्यम् ।
श्येनो हि वधसाधनं न तु नरकसाधनमिति न तत्र
विध्यर्थान्वयानुपपत्तिः । श्येनाद्वधो वधाच्च नरक इति न
वआस्तिकानां प्रवृत्तिः ।

यद्यपि बलवदनिष्टप्रयोजकेऽपि प्रवृत्त्यभावाद् बलवद-
निष्टाप्रयोजकज्ञानमेव प्रवर्तकमिति विध्यर्थोपि स एवेति
श्येने विध्यर्थबाध एव । तथापि विध्यर्थो बलवदनिष्टा-
जनकत्वमेव, बलवदनिष्टाप्रयोजकत्वज्ञानं तु मानसमेव
मत्कृतिसाध्यताज्ञानवत् । न हि प्रवर्तकं ज्ञानं विधिजन्यं
किं तु मानसम् । न च हिंसाया नरकसाधनत्वस्यानुमाना-

द्वगतत्वात् श्येनस्यापि मरणोद्देश्यकमरणानुकूलव्यापार-त्वेन हिंसात्वाद्विध्यर्थानन्वयस्तदवस्थ इति वाच्यम् । कूपखननस्य विहितत्वेन कूपकर्तुर्गोधकर्तृत्ववारणाय मर-णोद्देश्यकत्वविशेषणवद् श्येनस्य विहितत्वेनादृष्टाद्वारक-त्वेनापि मरणानुकूलव्यापारस्य विशेषणीयत्वात् । अन्यथा त्रिसन्ध्यं गंगामरणोद्देशेन कृतस्तवपाठादेरपि हिंसात्वा-पत्तेः । तथा च श्येनस्यादृष्टद्वारकत्वाद् हिंसात्वाभावान्न विध्यर्थान्वयानुपपत्तिः ।

वस्तुतस्तु बलवदनिष्टाननुबन्धित्वं कृतेर्विशेषणं कृ-तिसाध्यस्य वेत्यत्र विनिगमकाभावात् प्रत्येकमेव शक्यं तथा च श्येनादौ बलवदनिष्टाननुबन्धित्वस्यायोग्यत्वादन-न्वयेऽपि इष्टसाधनत्वकृतिसाध्यत्वयोरन्वयो नानुपपन्नः एवं न कलञ्जं भक्षयेदित्यत्र नञर्थे बलवदनिष्टाननुबन्धि-त्वस्यैवान्वयो न तु कृतिसाध्यत्वेष्टसाधनत्वयोस्तयो-स्तत्र सत्त्वात् ।

न च श्येनविध्यर्थबलवदनिष्टाननुबन्धित्वानन्वये बलवदनिष्टाननुबन्धित्वस्य ज्ञानस्य प्रवर्तकस्याभावात् कथं तत्र प्रवृत्तिरिति वाच्यम् । अगम्यागमनादाविव रागा-न्धानां मनसा भ्रमरूपतादृशज्ञानादेव प्रवृत्तेः । न च ज्योतिष्टोमादौ मानसबलवदनिष्टाननुबन्धित्वज्ञानादेव प्रवृत्त्युपपत्तेर्बलवदनिष्टाननुबन्धित्वस्य शक्यत्वे माना-भाव इति वाच्यम् । तस्याशक्यत्वेन कलञ्जं भक्षयेदित्यत्र निषेधानुपपत्तेरिष्टसाधनत्वकृतिसाध्यत्वयोर्विध्यर्थयोस्त-त्र सत्त्वात् । न च लक्षणीयबलवदनिष्टाननुबन्धित्वस्य निषेधोऽस्त्विति वाच्यम् । विधौ लक्षणाया अनङ्गीकार-

स्य सर्वसंमतत्वात् । अन्यथा विधिनिषेधाभ्यां निष्फलप्रवृत्तिनिवृत्त्योरजननापत्तेः ।

इदं तु बोध्यम् । श्येने बलवदनिष्टाननुबन्धित्वज्ञानवत् स्वकृतिसाध्यताज्ञानवच्च ज्योतिष्टोमादावपि बलवदनिष्टाननुबन्धित्वस्य कृतिसाध्यत्वस्य च मनसैव ज्ञानसम्भवादिष्टसाधनत्वमेव विध्यर्थः । न च मदीयेष्टसाधनताज्ञानवदिष्टसाधनताज्ञानमपि मानसमस्तु किं तत्रापि शक्त्येति वाच्यम् । न हि यागादौ इष्टसाधनताज्ञानं प्रवर्तकम् । किं तु स्वर्गसाधनताज्ञानं तच्च विधिना जन्यते तावन्मात्राच्च न प्रवृत्तिरिति स्वर्गेच्छापि तत्सहकारिणी सा च स्वर्गज्ञानात् । तथा च स्वर्गादीच्छा स्वर्गादीष्टसाधनाताज्ञानमिदं द्वयं चोपायेच्छाद्वारा प्रवृत्तौ हेतुः । कृतिसाध्यत्वस्य ज्ञानं तु साक्षात्तत्र च तस्मिन् तत्सामग्रीतत्स्वरूपादिज्ञानादन्वयव्यतिरेकाभ्यां ग्रहीतुं शक्यं कलञ्जभक्षणे तु लक्षणीयबलवदनिष्टाननुबन्धित्वस्यैव निषेधो न विधौ परः शब्दार्थ इत्यत्र विधिशब्देन प्रवर्तकविधेरेव ग्रहणं न तु निवर्तकविधेरितियुक्तमुत्पश्यामः ।

नन्वस्तु इष्टसाधनत्वमात्रं कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वत्रयं वा विध्यर्थः । तथापि कृतिसाध्यत्वज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं इष्टसाधनताज्ञानं प्रवर्त्तकं तत्रेष्टसाधनताज्ञानमुपायेच्छाद्वारा, द्वयं तु स्वानन्त्र्येण । अथ वा यागत्वावच्छिन्नविशेष्यतया प्रवृत्तौ तादृशविशेष्यतया कृतिसाध्यत्वप्रकारिकेच्छैव बलवदनिष्टाजनकत्वज्ञानसहिता हेतुस्तत्र च कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानं जनकम् । अथ वा बलवदनिष्टाननुबन्धित्वज्ञानमप्युपायेच्छाद्वारैव प्रवृत्तिहेतुरित्यत्र विनि-

गमकाभाव इति चेन्न । कृतिसाध्यपाकोद्देश्यिका कृतिसाध्यः पको भवत्विति येच्छा तत्र कृतिसाध्यपाकत्वधर्मितावच्छेदकमिष्टसाधनताज्ञानं हेतुः । तथा च पाकत्वेन पाककृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानात् प्रवृत्त्यभावापत्तिरिति कश्चित् ।

परे तु पाकत्वेन पाकेष्टसाधनताज्ञानेऽपि पाकत्वेन तत्र कृतिसाध्यताज्ञानात् कृतिसाध्यत्वप्रकारिकेच्छोत्पत्तिः । यद्धर्मविशिष्टेष्टसाधनताज्ञानं तद्धर्मविशिष्टे यदुपायसाध्यताज्ञानं तदुपायसाध्यत्वप्रकारिकेच्छास्ति । न च सैव प्रवृत्तौ हेतुरस्त्विति वाच्यम् । विशेष्यतया प्रवृत्तौ विशेष्यतया इच्छात्वेनैव कारणत्वात्. न तु कृतिसाध्यत्वप्रकारिकेच्छात्वेन, गौरवात् । न च कृतिसाध्यत्वप्रकारकज्ञानस्य प्रवृत्तौ कारणत्वे गौरवमिति वाच्यम् । इष्टसाधनत्वेऽपि पाके कृतिसाध्यत्वसंशयान्निष्कम्पं प्रवृत्त्यनुदयात्तादृशप्रवृत्तौ कृतिसाध्यत्वप्रकारकनिर्णयस्य हेतुत्वावश्यकत्वेनेच्छाया एव लाघवेन प्रवृत्तौ हेतुत्वमित्याहुः । तन्न अल्पवित्तायाससाध्यकृतिसाध्यत्वसन्देहेऽपि प्रवृत्तेर्बहुवित्तव्ययायाससाध्ये तु कृतिसाध्यत्वसन्देहे बलवदनिष्टाननुबन्धित्वसंशयेन निश्चयाभावादेव प्रवृत्त्यनुत्पत्तेः । न चाल्पायाससाध्ये निष्कम्पप्रवृत्तौ कृतिसाध्यत्वनिश्चयो हेतुरिति वाच्यम् । निष्कम्पत्वानिरुक्तेरिति दिक् ।

परे तु कृतिसाध्यत्वनिर्णय एव चिकीर्षाहेतुः । स्वल्पव्ययायाससाध्यत्वसंशयात्प्रवृत्त्यभावस्त्विष्ट एवेति चिकीर्षैव प्रवृत्तिहेतुरित्याहुः ।

नन्वस्तु कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानं च चिकीर्षाद्वारा प्रवृत्तिहेतुः । बलवदनिष्टाननुबन्धित्वज्ञानं तु कथं प्रवर्तकम् ।

अत्र केचित् तदप्युपायेच्छाद्वारैव ।

साक्षादित्यपरे । अत एव बलवदनिष्टाननुबन्धित्वसंशयेनेच्छोत्पत्तावपि तन्निश्चयाभावान्न प्रवृत्तिरिति दिक् ।

वस्तुतस्तु बलवदनिष्टाननुबन्धित्वनिश्चयस्यैव इच्छाहेतुत्वात् । ननु पाकत्वप्रकारिकेच्छायां नेच्छाविषयौदनसाधनताज्ञानं हेतुः । तेन विनापि ओदनसाधनं पाक इति ज्ञानात्पाकेच्छोत्पत्तेरिति चेन्न । ओदनसाधनत्वप्रकारिकेच्छायां स्वाव्यवहितोत्तरेच्छायां वा तस्य हेतुत्वात् ।

अन्ये तु पाकसाध्य ओदनो भवत्वितीच्छायां समवायेनौदनः पाकसाध्य इति ज्ञानम् ओदनेच्छा च हेतुः, स्वाव्यवहितोत्तरपाकेच्छायां वा, न तु इष्टसाधनताज्ञानम् । इच्छाया असिद्धधर्मविषयत्वेन साधनत्वस्य सिद्धधर्मत्वे-नेच्छाविरोधित्वादित्याहुः ।

नन्वस्तु नित्यस्य ।

सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥

इत्याद्यर्थवादाद्युपस्थितफलसाधनत्वं तथापि तादृशब्रह्मलोकादिफले यदा न कामना तदा सन्ध्यावन्दनादौ प्रवृत्तिर्न स्याद् इष्टसाधनत्वेनाज्ञानात् । नच तदा प्रत्यवायाभावरूपेष्टसाधनताज्ञानात्तत्र प्रवृत्तिरिति वाच्यम् । अत्यन्ताभावादीनामनादितया प्रत्यवायध्वंसस्यैव फलत्वं वाच्यम्, तच्च न सम्भवति दुरितध्वंसार्थिनो यत्र प्रवृत्तिस्तस्मिन् दुरितस्याधिकारतया स्वस्मिन्नधिकारनिश्चयस्य प्रवर्त्तकत्वेन तन्निश्चयस्यापि हेतुत्वेन तन्निश्चयाभावात् । न च पापभ्रमेण कृतप्रायश्चित्ताद् दुरितध्वंसोत्पत्तिवारणाय दुरितध्वंसे दुरितस्यावश्यं हेतुता वाच्या तथा च तन्निश्च-

यस्य हेतुत्वे न मानमिति वाच्यम् । दुरितवतामेवागमेनाधिकारित्वबोधनात् । तन्निश्चयस्यापि तत्र हेतुत्वमितिचेन्न । सन्ध्यावन्दनादौ तथागमाभावात् मङ्गलवद्दुरितध्वंसार्थं प्रवृत्त्युपपत्तेः । वस्तुतो दुरितनिश्चयोप्यत्राप्यस्त्येवेति ध्येयम् । न च दुरितध्वंसे यदा न कामना तदा प्रवृत्तिर्न स्यात्, इष्टत्वादित्याहुः ।

अन्ये तु सन्ध्यावन्दनाकरणे निन्दार्थवादेन नरकश्रुतेः प्रायश्चित्तोपदेशाच्च प्रत्यवायकल्पनेन प्रत्यवायपरिहारसाधनत्वेन तत्रेष्टसाधनताज्ञानान्नियमतः प्रवृत्तिः । प्रत्यवायपरिहारः प्रत्यवायप्रागभावः, तस्यानादित्वेपि यस्मिन् सत्यग्रिमक्षणे यत् सत्त्वं यद्व्यतिरेकेऽसत्त्वमिति योगक्षेमसाधारणसाध्यत्वं तत्राप्यक्षतमित्याहुः ।

परे तु निन्दार्थवादेन प्रायश्चित्तोपदेशेन चोपासनाभावस्य प्रत्यवायहेतुत्वावगमादुपासनाभावस्य प्रत्यवायद्वारा दुःखसाधनत्वावगमात्तदभावस्य सन्ध्यावन्दनस्य दुःखसाधनत्वाभावत्वेनेष्टत्वं तथा च दुःखसाधनाभावरूपसन्ध्यावन्दनरूपेष्टसाधनत्वेन कृतेर्ज्ञानादेव तत्र प्रवृत्तिरिति ।

नन्वस्त्वर्थवादोपस्थितदुरितध्वंसरूपेष्टसाधनत्वज्ञानात् सन्ध्यावन्दनादौ प्रवृत्तिः । ऋतौ स्वदारगमनप्रवृत्तिः कथम् । तत्र प्रत्यवायध्वंसस्यार्थवादादनुपस्थित्याऽफलत्वात् । नापि दुरितप्रागभावः, तस्यासाध्यत्वात्तस्यानङ्गीकाराच्चेति चेन्न ।

ऋतुस्नातां तु यो भार्याम्, इत्यादिवचनैकवाक्यतया ऋतुकालीनस्य गमनाभावस्य प्रत्यवायजनकतया तत्परिहारार्थं तत्र प्रवृत्तेः । न च तत्परिहारस्य तत्प्रत्यवायाभा-

वरूपत्वेनोक्तरूपेण फलत्वासिद्धिरिति वाच्यम् । प्रागभावस्यातीन्द्रियत्वेनानङ्गीकारेपि तद्वदेव । भावान्तरस्यापि साध्यत्वाङ्गीकारादिति कश्चित् ।

ननु घटो भविष्यति इति प्रत्यक्षानन्तरं घटो भविष्यतीति प्रयोगात् वर्तमानप्रागभावप्रतियोगित्वरूपभविष्यत्वस्य प्रत्यक्षविषयत्वेन प्रत्यक्षमेव प्रागभावे मानम् । न चैकद्वित्रिकपालसंयोगप्रत्यक्षेऽपि घटो भविष्यतीति प्रत्यवायाभावात् । घटव्यभिचारित्वेनाज्ञातविषयस्य घटजनकत्वेन ज्ञातस्य तत्प्रत्यक्षे हेतुत्वे गौरवात् प्रागभावव्याप्यत्वेन तज्ज्ञानस्य हेतुत्वं वाच्यम् । तथा च तेन प्रागभावानुमितिरेवास्त्विति वाच्यम् । समानविषये प्रत्यक्षसामग्र्या बलवत्वेन प्रागभावप्रत्यक्षस्यैव सम्भवात् । न च प्रत्यक्षसामग्र्या बलवत्वे मानाभाव इति वाच्यम् । स्थाणुर्वा पुरुषो वेति संशयोत्तरं पुरुषे पुरुषत्वव्याप्यपाणयादिमान् इति विशेषदर्शनोत्तरं पुरुषत्वप्रत्यक्षस्यैव मानत्वात् । न च तत्तल्लौकिकप्रत्यक्षसामग्र्यास्तदनुमितिं प्रति प्रतिबन्धकत्वं वाच्यम् । तथा च पर्वतप्रत्यक्षसामग्र्यां कथं पर्वतानुमितिरिति वाच्यम् । तद्विधेयकानुमितावेव तत्प्रत्यक्षसामाग्र्यविरोधित्वात् । एवं पर्वतविधेयकानुमितिसामग्र्याः पर्वताद्यविषयकप्रत्यक्षे प्रतिबन्धकत्वेन न पर्वतानुमितिकाले पर्वतान्यप्रत्यक्षम् । भिन्नविषयकानुमितिसामग्र्यास्तादृशप्रत्यक्षे प्रतिबन्धकत्वात् । न चानुमितिसामग्र्याः प्रत्यक्षत्वमेव प्रतिबध्यतावच्छेदकमस्तु, लाघवान्न तु उक्तप्रतिबध्यप्रतिबन्धकभावः गौरवात् । सर्वत्रानुमित्युत्तरमेव प्रत्यक्षोत्पत्तिस्वीकारादिति वाच्यम् । तत्रानुमिनोमीति अनुव्यवसायाभावात्

साक्षात्करोमीति प्रत्ययसत्त्वाच्चानुमित्यभावसाधकप्रत्यक्षस्यैव प्रमाणत्वात् । कालादिघटितानेककारणानां प्रतिबन्धकत्वे मानाभावात् । असाधरणतत्तत्कारणानामेव प्रतिबन्धकत्वस्वीकारात् । किं चानुयोगिताविशेषरूपस्य अखण्डोपाधिरूपस्य वा प्रागभावत्वस्य कुत्राप्यज्ञानादनुमानासम्भवः । अत एव सामग्रीज्ञानानन्तरं सामग्र्याव्याप्यत्वेन ज्ञानात् प्रागभावप्रत्यक्षं वाच्यं तदा च प्रागभावत्वस्य नष्टत्वान्न तत्प्रत्यक्षं किं त्वनुमितिरिति परास्तम् । सामग्रीकालेऽपि प्रागभावव्याप्यत्वेन सामग्रीज्ञानाच्चेति चेन्न ।

वर्तमानस्यातीन्द्रियत्वेन तद्घटितभविष्यत्वस्य लौकिकप्रत्यक्षासम्भवात् । किं च भविष्यत्वं वर्तमानकालोत्पत्तिकत्वं न तु भवदभिमतम् । तथा सति देशकालयोः प्रागभावे प्रतियोगिनि वान्वयो वाच्यः । तथा च श्वोभाविनि अद्यभविष्यत्यद्यभाविनि श्वो भविष्यतीति प्रत्ययप्रसङ्गात् । अन्यत्रोत्पन्ने गृहवर्तिनि गृहे भविष्यतीति प्रत्ययप्रसङ्गाच्च । इह घटो भविष्यतीत्यादौ तादृशोत्पत्तौ देशविशेषः कालविशेषश्चाधिकरणत्वेनान्वेति न तूत्पत्तिरिति । तेनाद्य भवने समुत्पद्य श्वः प्राङ्गणे वर्तिनि न श्वः प्राङ्गणे भविष्यतीति प्रत्ययः ।

कश्चित्तु घटस्यापि घटध्वंसप्रागभावत्वात्कपालनाशजन्यघटनाशस्य कपाले घटध्वंसो भविष्यतीत्यापत्त्या न प्रागभावे देशान्वय इत्याह तन्न । नाशोत्पत्त्यधिकरणे एव नाशप्रागभावस्वीकारात् । अत्रोत्पत्तिर्धात्वर्थः प्रत्यार्थः वर्तमानकालोत्तरकालीनत्वं तच्च धात्वर्थेऽन्वेति धात्वर्थस्तु आख्यातार्थाश्रयत्वे तथा च वर्तमानकालोत्तरकालीनोत्पत्त्याश्रय इति बोधः । न तु प्रत्ययार्थौ वर्तमान-

कालोत्तरकालीनोत्पत्तिकत्वं तथा च घटो वर्तमानकालोत्तरकालीनोत्पत्तिका या उत्पत्तिस्तदाश्रयइति स्यात्। स च न सम्भवति उत्पत्तेरुत्पत्त्यनङ्गीकारात् । तदङ्गीकारेऽपि लाघवेनोक्तस्यैव प्रत्ययार्थत्वाच्च ।

ननु धात्वर्थे कालादेरन्वये श्वो भाविनाशके परश्वो नङ्क्ष्यति इति प्रत्ययः स्यात् । नाशस्य धात्वर्थस्य परश्वः सम्बन्धित्वात् । नष्टे च नश्यतीति स्यात् । नाशस्य वर्तमानत्वात् । नष्ट इति न स्यात् । नाशे वर्तमानध्वंसप्रतियोगिरूपातीतत्वाभावाच्चेति चेन्न । नङ्क्ष्यतीत्यत्रानागता नश्यतीत्यत्र वर्तमाना नष्ट इत्यत्रातीता उत्पत्तिर्धातुना बोध्यते । तत्रोत्पत्तिर्लक्षणया धात्वर्थः । अतीतत्वादिकं तु पूर्ववत् प्रत्ययार्थ एव । तस्यां कालादेरन्वयः। तथा च अतीता या उत्पत्तिस्तत्काले यो नाशस्तत्प्रतियोगी घट इति बोधः । धात्वर्थयोः परस्परान्वयस्य युगपद्वृत्तिद्वयस्य च स्वीकारादिति केचित् ।

दीधितिकृतस्तु तादृशोत्पत्तेः प्रकृते लक्षणया प्रत्ययार्थत्वात् । तस्या धात्वर्थनाशेऽन्वयमाहुः ।

धातोरेव तादृशोत्पत्तिकनाशे लक्षणेत्यपरे ।

कश्चित्तु उत्पत्तेरपि उत्पत्तिस्वीकारादतीतानगता विद्यमानोत्पत्तिरेव तत्तत्प्रत्ययार्थः । तथा च तस्यामेव देशकालादेरन्वयमाह ।

ननूत्पत्तौ अनागतत्वं वर्तमानप्रागभावप्रतियोगित्वं तथा च नङ्क्ष्यतीत्यत्र विद्यमानप्रागभावप्रतियोगिनि या उत्पत्तिस्तद्वान् यो नाशस्तत्प्रतीयोगी घट इति बोधात् प्रागभावसिद्धिरिति चेन्न । वर्तमानकालोत्तरकालीनत्वस्यैवोत्पत्तावनागतत्वात् ।

केचित्तु नष्ट इत्यत्रातीतकालसम्बन्धित्वं अतीतत्व वर्तमानकालसम्बन्धित्वं वा निष्ठार्थः । तस्या धात्वर्थनाशेऽन्वय इति तन्न । चिरनष्टेऽपि पूर्वदिनरूपातीतकालवृत्तित्वस्य सत्त्वात्पूर्वेद्युर्नष्ट इति प्रत्ययापत्तेः । नाशे वर्तमानत्वरूपाधुनार्थस्य सत्त्वादधुना नष्ट इति प्रत्ययापत्तेश्च ।

अन्ये तु नशधातोर्नाशसामग्र्येवार्थः । नश्यत्यत्र सामग्रीघटकेषु सर्वत्र वर्तमानत्वान्वयः ।

नङ्क्ष्यति नष्ट इत्यत्र तद्घटकेषु केषु चिदेवातीतत्वानागतत्वयोरन्वय इत्याहुः । तन्न सामग्र्या एकस्या अभावादनन्तशक्तिकल्पने गौरवापत्तिप्रसङ्गात् ।

परे तु यथा आद्यक्षणसम्बन्ध उत्पत्तिः । तथा चरमक्षणसम्बन्धो नाशः । तथा च नष्ट इत्यादेरुत्पत्तिरिति तन्न ।

गुरुमते तथात्वसम्भवेऽपि न्यायनये लाघवेन नाशत्वविशिष्ट एव शक्तेः । न चोक्तेन निर्वाहे नातिरिक्तनाशे प्रमाणम् । चिरातीतेऽपि मणौ मणिध्वंसाद्दाहोत्पत्तेः । महाघटध्वंसात् खण्डघटोत्पत्तेश्च । न च चरमक्षणविशिष्टमहाघटद्वितीयक्षणे खण्डघटो भवितुमर्हति । जन्यद्रव्ये द्रव्यस्य प्रतिबन्धकत्वात् । क्षणस्य क्षणिकस्योपगमे तन्नाशस्यातिरिक्तस्यावश्यमुपेयत्वात् । तत्र चरमक्षणाभावात् । न च स एव क्षण उत्पत्तिर्नाशश्च । इदानीमुत्पद्यते नश्यति चेति प्रत्ययापत्तेः । किं च चरमक्षणसम्बन्धस्य नाशे विद्यमानध्वंसप्रतियोगित्वरूपातीतत्वाभावेन नष्ट इत्यादेरनुपपत्तिः ।

केचित्तु भूसत्तायामित्यनुशासनाद्वस्तुस्वरूपा सत्ता धात्वर्थः । आकाशमस्तीत्यत्रेवाकाशं भवतीत्यत्रेष्टापत्तिरेव ।

परदिने भविष्यतीत्यादौ सप्तम्या उत्पत्तिर्बोध्यते । शरदि पुष्प्यन्ति सप्तच्छदा इत्यादौ सप्तम्या उत्पत्त्यर्थकत्वव्यवस्थापनादुत्पत्तौ लाक्षणिकत्वेऽप्यक्षतेः । प्रत्ययस्य वर्तमानप्रागभावप्रतियोगित्वमेवार्थः । तथा च वर्तमानप्रागभावप्रतियोगिनी परदिनीया या उत्पत्तिस्तद्वत्सत्ताश्रयो घटः । नङ्क्ष्यतीत्यादौ नाशो सप्तम्यर्थोत्पत्त्यन्वयः ।

नष्ट इत्यादौ वर्तमानत्वमेव निष्ठार्थः । सप्तम्या उत्पत्त्यर्थकत्वेनैव पूर्वदोषनिरासात् । नश्यतीत्यादौ परं वर्तमानोत्पत्तिः प्रत्ययार्थं उत्पत्स्यते इत्यादौ सप्तम्यर्थं आधेयत्वम् उत्पत्तौ धात्वर्थेऽन्वेति इत्याहुः ।

ननु घटोत्पत्तेः पूर्वं घटो नास्ति इति प्रत्यक्षं ध्वंसात्यन्ताभावाविषयकं प्रागभावविषयकमिति प्रागभावसिद्धिरिति चेन्न । प्रागभावानङ्गीकारेण तस्यात्यन्ताभावविषयकत्वात् । इह घटप्रागभाव इति प्रत्ययस्तु न कस्यापि ।

केचित्तु पूर्वत्वं प्रागभावाधिकरणसमयवृत्तित्वं तत्पूर्वत्वं तत्प्रागभावाधिकरणसमयवृत्तित्वम् । उत्पत्तिश्च स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिसमयसम्बन्धरूपा स्वाधिकरणक्षणवृत्तियावत्प्रागभावाधिकरणसमयसम्बन्धरूपा वा प्रागभावं विना दुर्वचेति प्रागभावसाधकमाहुः तन्न । अतीतकालवृत्तित्वतदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वादिनैव पूर्ववत् तत्पूर्वत्वव्यवहारसम्भवादुत्पत्तेरपि स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपाया यदीयसमयत्वं यत्समयवृत्तिध्वंसप्रतियोगित्वाभावव्याप्यं तत्समयसम्बन्धरूपाया वा स्वीकारात् । अत एव महाप्रलयाङ्गीकारे तदुत्पत्तौ नाव्याप्तिः । यद्वा यदधिकरणक्षणावृत्तियद्वृत्तिध्वंसप्रतियोगिताकस्व

यदवृत्तित्वव्याप्ययद्वृत्तिध्वंसप्रतियोगिताकत्वम् । तस्य तत्सम्बन्धस्य तदुत्पत्तिपदार्थत्वात् । अत एव स्वजन्यविभागप्रागभावावच्छिन्ना क्रिया क्षण इति प्रागभावसाधकं निरस्तम् । स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वस्य स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टत्वस्य स्ववृत्तियावद्ध्वंसविशिष्टत्वस्य स्ववृत्तियावदभावविशिष्टस्य वा क्षणत्वस्वीकारात् ।

केचित्तु तन्तुत्वेन पटत्वेन कार्यकारणभावस्वीकारात् सहस्रतन्तुपटस्य स्वानधिकरणेषु तन्तुषु उत्पत्तिवारणाय तत्पटं प्रति तत्प्रागभावस्य हेतुत्वं न त्वनन्तानां तत्तत्तन्तूनां तत्त्वेन हेतुत्वं गौरवापत्तेः । न च तन्त्वन्तरेषु घटोत्पत्तौ तस्यैव प्रतिबन्धकत्वम् । अन्यदा द्रव्यजनकसंयोगाभावादेव न तदुत्पत्तिरिति वाच्यम् । घटान्तरोत्पत्तिसमय एव सहस्रतन्तुकपटापादनसम्भवात् प्रागभावसाधकमाहुः ।

तन्न त्रिषु चतुर्ष्वेव विजातीयसंयोगे सहस्रतन्तुकपटोत्पादनवारणार्थं तावत्तन्तुसंयोगाकारणत्वमवश्यं वाच्यम् । तथा च प्रागभावकारणत्वे मानाभावात् । न च प्रागभावव्याप्ययावत्तन्तुसंयोगानां जनकत्वं वाच्यम् । कतिपयसंयोगनाशे पटानुत्पत्तिप्रसङ्गात् । न च तत्पटव्याप्ययावत्संयोगेनैव लाघवेन हेतुत्वात् । यावत्त्वानिरुक्तेश्च तत्तद्व्यक्तित्वेनैव हेतुत्वकल्पनात् । न च यावत्त्वमपेक्षाबुद्धिविषयत्वमवच्छेदकं तथा चैक एव कार्यकारणभाव इति वाच्यम् । अपेक्षाबुद्धेश्चैत्रमैत्रीयादिभेदादनन्तकार्यकारणभावतादवस्थ्यात् । कारणतावच्छेदके गौरवस्याधिक्याच्च । न च तत्तत्संयोगत्वेन सह-

स्रतन्तुकपटं प्रति कारणत्वेऽपि द्वित्रितन्तुसंयोगेन खण्डप-टोत्पत्तौ कथमग्रे सहस्रतन्तुकपटोत्पत्तिस्तत्पटस्य तत्र प्रति-बन्धकत्वादिति वाच्यम् । दृढतराभिघातेन तन्नाशादेव सहस्रतन्तुकपटोत्पत्तेः । अत एव सहस्रतन्तुकपटोत्पत्ति-समये न खण्डोत्पत्तिः । महापटध्वंसस्य तत्र हेतुत्वाद्वा खण्डपटजनकसंयोगस्य महापटजनकसंयोगकाले एवोत्प-त्तेरभ्युपगमात् ।

अपरे तु सहस्रतन्तुकपटस्य समवायेनोत्पत्तौ न तत्तत्त-न्तूनां तत्तत्संयोगादीनां वा हेतुता सम्भवति तन्त्वन्तरे तु पटसमवायेन सत्त्वेन व्यभिचारात् । अनन्तकार्यकारण-भावेन गौरवाच्च । अत एव तत्तत्तन्तौ समवायस्य भिन्न-स्याङ्गीकारेऽपि न निस्तारः ।

न च कतिपयसंयोगेषु सत्सु सहस्रतन्तुकपटोत्पत्त्या-पत्तिः । कालिकसंबन्धेन तत्पटोत्पत्तौ कालिकसम्बन्धेन चरमसंयोगव्यक्तेस्तत्त्वेन हेतुत्वात् ।

न च सहस्रतन्तुमात्रवृत्तिबहुत्वव्यक्तेस्तद्व्यक्तित्वेन-समवायेन हेतुतास्त्विति वाच्यम् । तत्पटाव्यवहितपूर्व-समये तदुत्पत्तौ मानाभावात् । चैत्रमैत्रीयापेक्षाबुद्ध्या-दिना विनिगमनाविरहाच्च । अतस्तत्कारणत्वेन प्रागभा-वसिद्धिः । तस्याभावत्वं तु भावत्वसाधकमानाभावात् । न चाभावत्वसाधकमानाभावाद्भावत्वं तस्य समवायेन ध्वंसप्रतियोगिनं प्रति द्रव्यस्य कारणत्वेनानादित्वासि-द्धेरिति वदन्ति तन्न ।

समवायत्वस्वरूपेण तस्य तत्कारणत्वेऽप्यपन्नेः । किं च तं प्रति कालिकसंबन्धेन चरमसंयोगव्यक्तेस्तदानी-मनन्तोत्पन्नानां वा प्रत्येकं हेतुत्वे विनिगमकाभावात् ।

अनन्तकार्यकारणभावापत्तेः । समवायानां नानात्वपक्षे तत्तद्द्रव्यवृत्तिसमवायेन कार्ये तादात्म्येन तत्तद्द्रव्याणां हेतुत्वस्य क्लृप्तत्वेन तेनैवातिप्रसङ्गसम्भवात् । किं च तद्व्यक्ति-त्वस्य कार्यतानवच्छेदकत्वेनापादनासम्भवः । तस्य समवायेनाकस्मिकत्वपरिहारार्थं कार्यतावच्छेदकत्वस्वीकारेऽपि तत्पटत्वेन तन्तूनामेव तादात्म्येन कारणत्वसम्भवात् । कारणतावच्छेदकावलीढस्यैव प्रकृते कार्योत्पत्तौ नियामकत्वात् । एवं जागराद्यज्ञानस्य चतुर्थे क्षणे उत्पत्त्यापत्ति-स्तत्कारणस्य पूर्वं सत्त्वात् । तज्ज्ञानरूपप्रतिबन्धकाभावस्य च तृतीयक्षणे सत्त्वात् । अत एव न द्वितीयतृतीयक्षणयो-स्तदापादानं तत्क्षणोत्पन्नानन्तानां प्रतिबन्धकत्वे प्रत्येकं विनिगमनाविरहादतिरिक्तप्रागभावसिद्धिरपि निरस्ता । द्वितीयादिज्ञानानामपि चतुर्थक्षणे तु उत्पादस्यापदानसम्भवेन जागराद्येत्यस्य वैयर्थ्यात् ।

न च द्वितीयादिज्ञाने पूर्वज्ञानस्य कारणत्वात् तज्ज्ञानस्य स्वोत्पत्तौ प्रतिबन्धकत्वान्नापादनमिति वाच्यम् । तत्तज्ज्ञानपूर्वकालोत्पन्नैः प्रत्येकं विनिगमनाविरहात् । तत्तज्ज्ञानसमकालोत्पन्नैः प्रतिबन्धकत्वेऽपि विनिगमनाविरहाच्च । सर्वत्र समवायेन तत्तद्व्यक्तिं प्रति क्लृप्तानां प्रत्येकं विनिगमनाविरहात् । अतिरिक्तकारणत्वेन प्रागभावसिद्धिर्वक्तुमशक्यत्वेन कार्यविशेषापादानायासवैयर्थ्यात् । न च द्वितन्तुकसंयोगस्य समवायेन तत्पटोत्पत्तौ कारणत्वसम्भवात, न प्रागभावसिद्धिरिति वाच्यम् । संयोगस्य वैजात्येन जन्यद्रव्यत्वावच्छिन्नं प्रति पटत्वावच्छिन्नं प्रति वा जनकत्वेन तत्तत्पटत्वावच्छिन्ने तस्य कारणत्वे विनिगमनाविरहे प्रत्येकं तैस्तैर्विनिगमनाविरहो दुर्वारः । न

च सामान्यतः कृप्रकारणस्यैव विशेष्यहेतुतेति वाच्यम्। तादृशनियमे प्रमाणाभावात्। अत एव तत्त्वज्ञानप्रागभावो दृष्टहेतुतया सिद्ध्यतीति निरस्तम्। तत्त्वज्ञानान्तरप्रागभावस्य सत्त्वेन तत्त्वज्ञानिनरेऽप्यदृष्टापत्तेः। आद्यतत्त्वज्ञानप्रागभावस्य च न हेतुत्वम्। आद्यत्वानिरुक्तेः। वैजात्यमेषामाद्यत्वम्। तथा चाद्यज्ञानप्रागभावस्य हेतुतेत्यपि निरस्तम्। लाघवेन वासनाया एव हेतुत्वसम्भवात्। तत्त्वज्ञानध्वंसस्य प्रतिबन्धकत्वाद्वा। न च तत्त्वज्ञानध्वंसस्य प्रतिबन्धकत्वे तत्त्वज्ञानोत्पत्तिक्षणतदुत्तरक्षणयोर्धर्माधर्मस्वीकारे गौरवमिति वाच्यम्। तत्त्वज्ञानोत्पत्तिक्षणे त्वयापि तत्स्वीकारात् किं चाद्यत्वज्ञाने वैजात्यस्वीकारापेक्षया तत्क्षणोत्पन्नध्वंसप्रतियोगिन्येव वैजात्यस्वीकारस्यैवोचितत्वादिति दिक्।

नन्वस्तु कृतिसाध्यताज्ञानं प्रवृत्तौ साक्षाच्चिकीर्षाद्वारा वा हेतुः। तथापि सिद्धे कपालादौ प्रवृत्तेस्तत्र कृतिसाध्यताज्ञानाभावात् कथं हेतुत्वमिति चेन्न।

प्रवृत्तेर्द्वैधा विषयता सिद्धताख्या उद्देश्यताख्या च। तत्र सिद्धताख्यविषयतया कपालादौ प्रवृत्तिः। तत्र कृतिसाध्यताज्ञानं न हेतुः। किं तु उद्देश्यताख्यविषयतया। तथा च समवायेन घटाद्युद्देश्यकप्रवृत्तौ घटः कृतिसाध्य इति ज्ञानं घटसाधनत्वेन तदुपादानप्रत्यक्षं घटेच्छा च समवायेन हेतुः। अतः कपालादिज्ञानाद्यभावकाले न घटोद्देश्यकाप्रवृत्तिरिति केचित्।

परे तु घटोद्देश्यकप्रवृत्तिः सिद्धताख्यविषयतासम्बन्धेन यत्र तत्र कृतिसाध्यताज्ञानं तत्र विशेष्यतासम्बन्धेन कपाले घटवत्त्वेन कृतिसाध्यताज्ञानसत्त्वान्न दोषः।

न च घटेच्छाविरहदशायां कपाले तादृशज्ञानात् प्रवृत्त्यापत्तिरिति वाच्यम् । घटवत्त्वेन कपाले इष्टसाधनताज्ञानाद् घटवत्त्वेन कपालेच्छाया अपि तत्र हेतुत्वात् समवायेन तादृशप्रवृत्तौ समवायेन घटेच्छाया घटसाधनताज्ञानस्यापि तत्र हेतुत्वाद्वेत्याहुः ।

अपरे तु सिद्धताख्यविषयतया घटोद्देश्यकप्रवृत्तौ घटेच्छा कृतिसाध्यघटसाधनमिति प्रत्यक्षं च हेतुरित्याहुः।

अन्येतु घटत्वावच्छिन्नोद्देश्यताख्यविषयतासम्बन्धेन प्रवृत्तौ घटत्वावच्छिन्नविशेषतासम्बन्धेन चिकीर्षा घटसाधनमित्युपादानप्रत्यक्षं च घटत्वावच्छिन्नप्रकारतासम्बन्धेन हेतुः । कृतिसाध्यताज्ञानस्य साक्षात्प्रवृत्तिहेतुत्वे तु तादृशप्रवृत्तौ घटत्वावच्छिन्नविशेष्यतासम्बन्धेन कृतिसाध्यताज्ञानमिच्छाहेतुः तादृशप्रत्यक्षं च तादृशप्रकारतयेत्याहुः ।

नन्वस्तूक्तरीत्या कृतिसाध्यताज्ञानं प्रवर्तकम् । बलवदनिष्टाननुबन्धित्वज्ञानं तु कथम् ।

अत्र केचित् कृतिसाध्यताज्ञानवत् साक्षादेव प्रवर्तकमिति वदन्ति ।

उपायेच्छाद्वारेष्टसाधनताज्ञानवदित्यपरे ।

ननु किं बलवदनिष्टाननुबन्धित्वम् । इष्टोत्पत्तिनान्तरीयकदुःखाधिक दुःखाजनकत्वं तदिति चेन्न । नान्तरीयकत्वानिर्वचनात् । न च कालिकसम्बन्धेन स्वजन्यसुखव्यापकत्वं तत् । सुखदुःखयोरसमानकालीनत्वेन पाकादिदुःखस्यापि अनान्तरीयकत्वापत्त्या तत्र प्रवृत्त्यभावापत्तेः । नापि दैशिकत्वेन व्यापकत्वं तत् । नरकदुःखस्यापि दैशिकेनागम्यागमनजन्यसुखव्यापकतया नान्तरीयकत्वेन तत्र

प्रवृत्त्यापत्तेः । न च स्वजन्येष्टात् पूर्वमुत्पन्नत्वं तत् । निदाघदूनदेहस्य निकटस्थसरोवगाहनवत् दूरस्थसरोवगाहनेऽपि प्रवृत्त्यापत्तेः । न च स्वोद्देश्यसुखोत्पत्तौ तदवश्यम्भावितत्वम्, निदाघदूनदेहस्य सन्तापशान्तेर्निकटस्थसरोवगाहनेन सम्भवात् दूरस्थसरोवगाहजन्यदुःखस्य नावश्यकत्वमिति न तत्र प्रवृत्तिरिति वाच्यम् । परस्त्रीगमनेऽपि प्रवृत्त्यापत्तेः । न च यज्जातीयेष्टतावच्छेदकावच्छिन्नोत्पत्तौ यदावश्यकं तत्त्वम् । कलञ्जभक्षणे प्रवृत्त्यापत्तेः । तज्जातीयसुखोत्पत्तौ अवश्यं नरकोत्पत्तेः । न च यद्दुःखं विना स्वोद्देश्यसुखानुपपत्तिस्तन्नान्तरीयकम् । बह्वायाससाध्यस्वल्पसुखजनके प्रवृत्त्यापत्तेः । न च विजातीयद्वेषविषयदुःखाजनकत्वं तत् । यागादावप्यप्रवृत्त्यापत्तेः । तद्दुःखस्यापि कस्य चिद् विजातीयद्वेषविषयत्वात् । अत एव विजातीयद्वेषे स्वीयत्वविशेषणेनापि न निस्तारः । यागादिदुःखस्यापि कदा चित् स्वीयतादृशद्वेषविषयत्वात् तत्कालीनत्वेन तादृशद्वेषस्य विशेषणीयत्वे त्वननुगमः । यदा तत्पुरुषस्य कुत्रापि न तादृशो द्वेषस्तदा प्रवृत्त्यभावापत्तेः । नचैतत्कालावच्छेदेन तत्पुरुषीयद्वेषविषयत्वाभाववत् यावत्स्वजन्यकत्वज्ञानं तत्पुरुषीयप्रवृत्तौ हेतुरिति वाच्यम् । द्वेषज्ञानस्याप्रवर्तकत्वादिति चेत् ।

अत्र के चित् पाकादिप्रवृत्तौ पाकजन्यत्वेनोपस्थिते बलवद्द्वेषस्य प्रतिबन्धकत्वात् ।

अन्ये तु पाकजन्यतत्तत्फले द्वेषतत्फलसाधनताज्ञानस्य प्रवृत्तौ प्रतिबन्धकत्वम् ।

अपरे तु विशेष्यतया प्रवृत्तौ विशेष्यतयोत्कटद्वेषः प्रतिबन्धकः । स चोत्कटद्वेषविषयसाधनताज्ञानात् । न

षोपायोत्कटद्वेषस्योपायप्रवृत्तौ न विरोधित्वमुपायप्रवृत्ति-जनकोपायेच्छाकाले तस्य सत्त्वात् । आत्मयोग्यविशेषगुणानां क्रमिकत्वनियमेनोपायेच्छाद्वेषसामग्र्योरव्यवहितपौर्वापर्यस्यैकक्षणवृत्तित्वस्य वाऽभावादिति वाच्यम् । ज्ञानयोरेव यौगपद्यानङ्गीकारेण यत्रागम्यागमनजन्यसुखदुःखयोर्युगपदेवेच्छाद्वेषौ तत इच्छाद्वेषविषययोर्युगपदेव साधनताज्ञानम् । तत उपाये द्वेषः, न त्विच्छा, उत्कटद्वेषाभावस्य कार्यसहभावेनोपायेच्छाकारणत्वेनोपायेच्छाविघटनद्वारैव तस्य प्रवृत्तौ प्रतिबन्धकस्वीकारात् । यद्वा उक्तस्थले उपायद्वेषोत्पत्तिकाले नेच्छाप्युपपद्यते ततस्तु न प्रवृत्तिः । उत्कटद्वेषस्य प्रवृत्तौ साक्षात्प्रतिबन्धकत्वात् । योग्यात्मविशेषगुणसामान्यस्य यौगपद्यानङ्गीकारे तु यत्रागम्यागमनेच्छा ततोऽगम्यागमने फलसाधनताज्ञानं दुःखसाधनताज्ञानं च ततोऽगम्यागमनेच्छासामग्र्योर्बलवत्त्वान्न दुःखे द्वेषः । तस्य स्वाश्रयजनकत्वज्ञानसम्बन्धेनागम्यागमनप्रवृत्तौ प्रतिबन्धकत्वात्कार्यसहभावेन प्रवृत्तौ तदभावस्य कारणत्वात्तदुत्पत्तिकाले तदुत्तरकाले च नागम्यागमने प्रवृत्तिरिति तन्न । तेन सम्बन्धेन उभयत्र काले द्वेषाभावेन प्रवृत्तेरवारणाद् द्वेषस्य प्रतिबन्धकत्वं मृग्यमिति ।

तादृशज्ञानस्यापेक्षाबुद्धिरूपत्वे तु तस्य प्रतिबन्धकत्वमित्यपरे । उत्कटद्वेषस्यानुत्कटेच्छां प्रति उत्कटेच्छाया अनुत्कटद्वेषं प्रति प्रतिबन्धकत्वम् । उत्कटत्वावच्छिन्नं त्वननुगतमेव कारणम् । अत एकस्य कालभेदेन प्रवृत्तिनिवृत्त्योरुपपत्तिरिति ।

आचार्यास्तु कार्याः कुर्यादित्यादौ प्रार्थना आशंसा लिङां इच्छावाचकत्ववद्विधिलिङोऽप्याप्ताभिप्रायो वा-

च्यः । तथा च यागादावाप्ताभिप्रायविषयत्वे ज्ञाते यागो- ऽभिदिष्टसाधनं ममाप्ताभिप्रायविषयत्वान्मन्मित्राद्यभिप्रा- यविषयभोजनवदित्यनुमानादिष्टसाधनत्वादिबोधात् प्र- वृत्तिरित्याहुः । तन्न आप्ताभिप्रायविषयत्वस्येष्टसाधनत्व- व्यभिचारितया साधनत्वेनाप्ताभिप्रायविषयत्वं हेतुर्वा- च्यः । तस्य च विधिनाऽज्ञानादिष्टसाधनत्वेनाप्ताभिप्राय- विषयो विध्यर्थो वाच्यः । तदपेक्षया इष्टसाधनत्वमेव विध्यर्थोऽस्त्विति दिक् ।

नन्वस्तु इष्टसाधनत्वादिकं विध्यर्थः । तथापि काला- न्तरभाविस्वर्गसाधनत्वं दर्शपौर्णमासयोः कथम् । आशु- तरविनाशित्वादिति चेन्न । अपूर्वस्य द्वारस्य स्वीकारात् । अत्र षट्प्रधानयागाः प्रत्यक्षविधिना अवगतकालयोगि- नः । तत्र त्रयाणां दर्शसम्बन्धः । त्रयाणां पौर्णमासे सम्ब- न्धः । तत्र त्रयाणामुत्पत्त्यपूर्वाणि त्रीणि तैर्जन्यमेकमपू- र्वमेवं चत्वारि । एवं त्रिकान्तरेऽपि इति अष्टौ कलिका- पूर्वाभ्यामेकमपूर्वं जन्यते तत्परमापूर्वमिति जन्यापूर्वैर्जन- कापूर्वनाशाभ्युपगमात् । नवापूर्वपक्षमाहुः ।

अन्ये तु परमापूर्वकलिकापूर्वयोश्च मानाभावेन षडेवापूर्वाणि । न चाङ्गानां प्रधानानां चापूर्वद्वारा फलहे- तुत्वेऽङ्गप्रधानयोः साम्येन सर्वेषां प्रधानत्वापत्तिरिति वा- च्यम् । त्वन्मतेऽपि अङ्गापूर्वाणां प्रधानोत्पत्त्यपूर्वाणामेव कलिकापूर्वहेतुत्वान्नोक्तदोष इति चेत्, मन्मतेऽपि अङ्गापूर्व- विशिष्टप्रधानापूर्वाणामेव फलहेतुत्वान्नोक्तदोषः । न च कलिकापूर्वानभ्युपगमे प्रयाजजन्यापूर्वस्यानाशात् प्रया- जानां पुनरनुष्ठानं न स्यादिति वाच्यम् । प्रयाजादीनामा- वृत्तौ मानान्तरमस्ति चेत्तत एव तत्कालीनप्रयाजजन्याप-

र्वविशिष्टस्य प्रधानापूर्वस्य फलकारणत्वस्वीकारेण तदनुष्ठानोत्पत्तेरिति दिक् ।

ननु चरमकारणातिरिक्तकारणसाधारणस्य कार्याव्यवहितपूर्वक्षणत्वव्यापकत्वस्वव्यापारान्यतरस्वत्वरूपस्य यागे प्रमितस्य निर्वाहार्थं व्यापारस्य कल्पना, स च क्रियाध्वंस एवास्तु लाघवान्नत्वदृष्टं, गौरवात् । न च प्रतियोगिध्वंसयोरेकत्राजनकत्वान्न ध्वंसस्य व्यापारतेति वाच्यम् । तादृशनियमे मानाभावादिति चेन्न । अपूर्वाभावे पापध्वंसरूपफलाभावेन प्रायश्चित्तवैयर्थ्यापत्तेः । न च प्रायश्चित्तध्वंसस्य नरकप्रतिबन्धकत्वमिति वाच्यम् । प्रायश्चित्तोत्तरकृतात् कर्मणो नरकाभावप्रसङ्गात् । न च प्रायश्चित्तध्वंसाज्जन्मान्तरनिषिद्धकर्मदुःखस्य प्रतिबन्धापत्तेः । एतज्जन्मकृततादृशकर्मजन्यदुःखे च न विरोधित्वम् । अप्रसिद्धेः । किं च तत्त्वज्ञानस्यापूर्वनाशकत्वेन वासनाध्वंसस्यापूर्वप्रतिबन्धकत्वेन वाऽपूर्वसिद्धिः । न च वासनाकालीनयागत्वेन हेतुत्वान्नोक्तदोषः । गौरवात् । एवम् ।

कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् ॥

इत्यादिवचनात् कीर्तनादिनाश्यातयापि धर्मसिद्धिर्द्रष्टव्या । विस्तरस्त्वस्मत्कृतगुणरहस्यटिपण्यां चावसेयः । स चेत्थम् । न च ध्वंसस्य नित्यत्वेन फलानन्त्यापत्तिः । त्वन्मतेऽपि सुखस्य स्पर्शनाशकत्वे प्रथमोत्पन्नसुखेन धर्मनाशेऽग्रे शतवर्षभाविस्वर्गसुखफलाभावापत्तिः । चरमसुखस्य विजातीयसुखस्य वा धर्मनाशकत्वान्न तादृशस्वर्गानुत्पत्तिरिति वाच्यम् । अपूर्वतत्प्रागभावध्वंसानाम-

पूर्वं प्रति कर्मणोऽपूर्वस्य च स्वध्वंसे कारणत्वस्य च कल्पनापेक्षया लाघवेन चरमसुखोत्पत्तिक्षणोत्पत्तिकध्वंसस्य तद्व्यक्तित्वेन विजातीयसुखध्वंसस्य वा तत्त्वेन प्रतिबन्धकत्वस्वीकारस्यैवोचितत्वात् । वैजात्यं भवन्मते चरमसुखे तदव्यवहितपूर्वक्षणोत्पन्नसुखे वा । अस्मन्मते चरमसुखोत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिसुखवृत्ति । न च विजातीयसुखध्वंसस्य तत्तद्ध्वंसस्य वा प्रतिबन्धकत्वेऽग्रेपि ज्योतिष्टोमान्तरजन्यस्वर्गो न स्यात् । अस्मन्मते विजातीयसुखस्य समवायेन ज्योतिष्टोमजन्यधर्मस्य विजातीयधर्मस्य वा नाशकत्वान्नाग्रे तादृशस्वर्गानुपपत्तिरिति वाच्यम् । येन ज्योतिष्टोमद्वयं कृतं तस्यैकज्योतिष्टोमफलवतः कर्मान्तरभोगोत्तरं ज्योतिष्टोमजन्यस्वर्गो न स्याद्विजातीयस्वर्गेण ज्योतिष्टोमजन्यादृष्टमात्रनाशात् । तत्तज्ज्योतिष्टोमजन्यधर्मे तत्तद्धर्मे वा तत्तज्ज्योतिष्टोमजन्यविजातीयस्वर्गस्य तत्सुखव्यक्तेर्वा नाशकत्वं यदि तदा तत्तज्ज्योतिष्टोमजन्यस्वर्गे तत्तज्ज्योतिष्टोमजन्यविजातीयस्वर्गनाशस्य तत्तत्सुखनाशस्य तत्तन्नाशस्य वा प्रतिबन्धकत्वादित्येके ।

परे तु अनन्तकार्यकारणभावकल्पनागौरवभयेन ज्योतिष्टोमजन्यापूर्वस्य विजातीयापूर्वस्य वा विजातीयस्वर्गनाश्यत्वात्, ज्योतिष्टोमद्वयजन्यस्वर्गयोरव्यवधाने नैवोत्पत्तिः कल्प्यते, वैजात्यस्य तत्र फलबलेन चरमस्वर्गे स्वीकारात् । युगपदेवादृष्टद्वयनाशः । भवन्मते त्वनन्तप्रतिबध्यप्रतिबन्धकभावापत्तिः ।

किं च कलञ्जभक्षणोत्तरं कृतप्रायश्चित्तस्यापि कलञ्जभक्षणजन्यफलापत्तिः । न च प्रायश्चित्तं तद्ध्वंसो वा प्रतिबन्धक इति वाच्यम् । कलञ्जभक्षणान्तरजन्यफलस्या-

भावापत्तेः । प्रायश्चित्तध्वंसस्य प्रतिबन्धकस्य विद्यमानत्वात् । तत्कलञ्जभक्षणजन्यफले प्रतिबन्धकत्वं त्वप्रसिद्ध्या न सम्भवति । अस्मत्मते प्रायश्चित्तस्य पापनाशकत्वात् पूर्वकलञ्जभक्षणजन्यपापस्य प्रायश्चित्तेन नाशेऽपि कलञ्जभक्षणान्तरजन्यस्य सत्त्वान्न फलानुपपत्तिरित्याहुः ।

केचित्तु अपूर्वाभावे ध्वंसद्वारा प्रधानानां फलकारणत्वाविशेषात् समप्राधान्यापत्तिरित्याहुः । तन्न । अङ्गध्वंसविशिष्टस्वध्वंससम्बन्धेन प्रधानस्यैव कारणत्वस्वीकारात् । आगमस्यैव विनिगमकत्वान्न वैपरीत्यम् । अन्यथाङ्गापूर्वविशिष्टप्रधानापूर्वं परमापूर्वं जनयति प्रधानापूर्वविशिष्टमङ्गापूर्वं वा इत्यत्रापि विनिगमकाभाव इति प्राहुः ।

ननु लाघवाद्यदापूर्वकल्पनं तदा तच्छ्राद्धादौ कर्तृनिष्ठमेकमेव कल्प्यतां पुरुषनिष्ठानेकादृष्टकल्पनायां गौरवादिति चेन्न । अमुक्तपुत्रश्राद्धेन मुक्तस्य स्वर्गोत्पादापत्तेः । मुक्तपुत्रश्राद्धेनामुक्तस्य स्वर्गानुत्पादापत्तेश्च । मुक्ते धर्माभावात् । न च तत्फलजनकधर्मं प्रति तदीयवासनाया हेतुत्वं, गौरवात् । किं चामुक्तपुत्रकृतकूटसाक्ष्यादिजनितपापेन नरकादिसंशयान्निःशङ्कं मोक्षे कोऽपि न प्रवर्तेत । अपि चादृष्टस्य कर्तृनिष्ठत्वे पितृगतचरमफलस्य परम्परया नाशजनकत्वे गौरवम् । मातृनिष्ठत्वे[1] समवायेन नाशकत्वे लाघवादिति दिक् ।

ननु विधेरिष्टधानत्वे शक्तिः, स्वर्गादिसाधनत्वे, वा । नाद्यः । स्वर्गादिसाधनत्वेन प्रवर्तके ज्ञानस्यानुपपादनात् । नान्त्यः । अनन्तशक्तिकल्पनापत्तेरिति चेत् ।

१ पुरुषनिष्ठत्वे इत्यर्थः ।

अत्र केचित् बुद्धिस्वत्ववदिच्छाविषयत्वेन स्वर्गादेरनुगमादिच्छाविषयसाधनत्वेन स्वर्गादिसाधनत्वेषु शक्तिर्बुद्धिस्वत्ववदिच्छाविषयत्वमोषात् स्वर्गसाधनत्वादिप्रकारको बोधः ।

परे तु लिङादेर्नानार्थत्वमिष्टमेवेति स्वर्गादिसाधनत्वेषु शक्तिः, स्वर्गकामादिपदस्य स्वर्गसाधनत्वे तात्पर्यग्राहकत्वात् स्वर्गकामेत्यादौ न फलान्तरसाधनत्वबोधः । न च विश्वजिता यजेतेत्यत्र स्वर्गकामपदाभावात् कथं स्वर्गसाधनत्वबोधः । तत्रापि न्यायेन स्वर्गसाधनत्वे तात्पर्यग्रहात् । न च प्रतितिष्ठन्ति इत्यादि न्यायेन स्वर्गसाधनतात्पर्यग्रहे स्वर्गसाधनत्वबोधापत्तिरिति वाच्यम् । तत्रार्थवादेन फलोपस्थितौ तादृशन्यायाभावेनार्थवादोपस्थितफलसाधनत्वे तात्पर्यग्रहादित्याहुः ।

ननु अर्थवादानां न बोधकत्वं कार्यान्विते पदानां शक्तिः । तथा हि प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यस्य प्रवृत्तिमुपलभमानो बालस्तत्प्रयोजकतया कार्यताविशिष्टज्ञानमनुमिनोति स्ववृत्तौ कार्यत्वविशिष्टज्ञानस्य हेतुत्वावधारणात् । ततस्तद्धेत्वाकाङ्क्षायामुपस्थितत्वाच्छब्दमेव तथावधारयति ततस्तन्निर्वाहिकां शक्तिं कार्यान्विते शब्दत्वावच्छेदेन कल्पयति तदनु आवापोद्वापाभ्यां घटादिपदे शक्तिग्रहोऽपि प्रथमकल्पनानुरोधात् कार्यान्वितघटादिविषयो जायते ।

ननु पदानां कार्यान्वितघटादौ यदि शक्तिस्तदाघटमानयेत्यतः कार्यान्वितघटत्वेन कार्यान्वितानयनत्वेन च बोधापत्तिः । गृहं घटवदित्यादितोऽपि शाब्दबोधापत्तिश्च । सर्वेषां पदानां कार्यान्वितवाचकत्वादिति चेन्न । घटादिपदा-

नां कार्यान्वितविषयकघटादिशाब्दबोधजनकत्वरूपा शक्तिर्गृहीता अतः कार्यवाचकपदाभावेन वृत्त्या पदजन्यकार्योपस्थितेरभावेन गृहं घटवदित्यादीनां शाब्दबोधाजनकत्वात् । न च वस्तुगत्या कार्यान्वितबोधजनकत्वं चेदर्थवादादेरपि बोधकत्वापत्तिः । कार्यत्वेन कार्यबोधकत्वं च न लौकिकलिङां कार्ये शक्तेरभावादिति वाच्यम् । लौकिकविधेः कार्यत्वे लाक्षणिकत्वेन सर्वेषां कार्यत्वान्वितविषयकशाब्दबोधे हेतुत्वान्न पुराणकाव्यनाटकादीनां प्रमाण्यमिति चेन्न । कार्यतावच्छेदकाग्रहेऽपि स्वर्गकामो यजेतेत्यादौ कारणत्वग्रहवदिहापि घटपदं कार्यान्वितघटज्ञानजनकमिति गृहीत्वा पश्चाल्लिङः कार्ये शक्तिं कल्पयित्वा घटशाब्दत्वं घटपदज्ञानजन्यतावच्छेदककार्यत्वविषयकघटज्ञानं तु कार्यत्वोपस्थापकपदसमभिव्यहारादि कल्पयतीति नाद्यव्युत्पत्तिविरोधः । यद्वा घटादिपदज्ञानानामस्तुकार्यत्वविषयकघटादिशाब्दत्वे कार्यतावच्छेदकत्वग्रहस्तथापि अग्रे लाघवेन घटादिशाब्दत्वं घटादिपदज्ञानानां कार्यत्वविषयकशाब्दत्वं कार्यवृत्तपदज्ञानानां कार्यतावच्छेदकं कल्पयति । न च प्रथमप्रवृत्तं बलवदिदं रजतमिति प्रथमप्रवृत्तस्यापि नेदं रजतमित्यनेन बाधादिति सिद्धं अर्थवादानामपि प्रामाण्यमिति दिक् ।

ननु तत्तच्छाब्दबोधे तत्तद्वृत्तपदस्य हेतुत्वात्, घटमानयेत्यादावन्वयशाब्दबोधात्, घटादिपदानामन्वयेऽपि शक्तिरावश्यकीति चेन्न । निरूपकत्वादिसम्बन्धेन घटप्रकारककर्मत्वादिविशेष्यकबोधे घटादिपदोत्तरद्वितीयात्वेन द्वितीयादिज्ञानस्य हेतुत्वेनैवान्वयबोधसम्भवेन तत्र शक्तेरकल्पनात् । तत्तत्प्रकारकशाब्दबोधे तत्तत्प्रकारेण

तदुपस्थित्यर्थं तेन तेन रूपेण तत्र वृत्तिपदज्ञानापेक्षेति नान्वये शक्तिरिति दिक् ।

अत्र मीमांसकाः, लाघवेन घटादिपदानां घटत्वादौ शक्तिस्तथा च घटत्वप्रकारकघटशाब्दबोधस्य घटत्वेन घटवृत्तपदज्ञानाभावेऽपि जायमानत्वान्नोक्तरूपेण हेतुत्वम् । न च व्यक्तिबोधाभावापत्तिः । घटत्वविशिष्टशक्तिज्ञानस्य घटत्वविशिष्टशाब्दत्वं कार्यतावच्छेदकं त्वन्मते, तच्च मन्मते घटत्वशक्तिज्ञानस्य कार्यतावच्छेदकं, कारणतावच्छेदके लाघवादित्याहुः । तन्न । घटत्वशक्तं घटपदमिति ग्रहत्वापेक्षया लाघवेन घटशक्तमिति ग्रहत्वेनैव घटशाब्दबोधे हेतुत्वात् । न च घटत्वेनैतद्घटे शक्तिग्रहाद्घटत्वेनान्यबोधो न स्यात् । न च घटत्वप्रकारकशक्तिग्रहस्य घटत्वाश्रयशाब्दत्वं कार्यतावच्छेदकमिति वाच्यम् । घटत्वेन पटे शक्तिग्रहात् घटत्वेन घटबोधापत्तेः । घटत्वेन पटबोधाभावापत्तेश्चेति वाच्यम् । सामान्यलक्षणया सर्वघटे शक्तिग्रहेण समानप्रकारकसमानविशेष्यतया शक्तिग्रहपदार्थस्मरणशाब्दबोधानां कार्यकारणभावाङ्गीकारात् ।

शक्तिश्च घटशब्दाद्घटत्वविशिष्टो बोधव्य इतीश्वरेच्छा । न च तादृशेच्छा विषयतया घटवत् पटेऽपि सत्त्वात् पटेऽपि घटपदशक्तिः स्यादिति वाच्यम् । घटत्वविशिष्टेच्छाया घटपदशक्तित्वस्वीकारात् । आधुनिकचैत्रादिपदेऽपि चैत्रत्वादिविशिष्टतादृशेच्छाया द्वादशेऽहनि पिता नाम कुर्यादित्यनेन वाचकत्वरूपनामत्वसिद्ध्या तस्याः शक्तित्वकल्पनात् । तद्भिन्नाधुनिकसङ्केतस्तु न शक्तिरिति प्राञ्चः ।

परे तु अस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छैव शक्तिरत आधुनिकसङ्केतोऽपि शक्तिः । अन्यथा नदीवृध्यादि-

संज्ञातो विभक्तिर्न स्यात् । अर्थवत्त्वाभावात् । ईश्वरेच्छा-शक्तिरिति प्रवादस्त्वनादिगवादिपदाभिप्रायेणेति वद-न्ति । तन्न । तत्रापीश्वरेच्छासत्त्वात् ।

नव्यास्तु नेश्वरेच्छाशक्तिः । अपभ्रंशे लाक्षणिके च तादृशेच्छासत्त्वेन शक्त्यापत्तेः । ईश्वरज्ञानकृतिभ्या-मस्माकं सर्वमिति सामान्यलक्षणाजन्यज्ञानेन च विनि-गमनाविरहाच्च । तस्यापि घटत्वविशिष्टस्य घटपदशक्ते-र्वक्तुं शक्यत्वात् । घटत्वोपहितेच्छेत्यत्रेच्छांशवैयर्थ्या-च्च । किं तु स्वरूपसंबन्धविशेष इति दिक् ।

शक्तिग्रहस्तु व्यवहारात् प्रसिद्धार्थपदसमभिव्याहा-रात्, विवरणात्, आप्तवाक्याद्व्याकरणादुपमानात्कोशात्, तथाचाहुः ।

> शक्तिग्रहं व्याकरणोपमान-
> कोशाप्तवाक्याद्व्यवहारतश्च ।
> वाक्यस्य विशेषाद्विवृत्तेर्वदन्ति
> सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

तथा चानुमानादिप्रयेण शक्तिग्रहः । व्यवहारादीनां तत्रैवान्तर्भावात् । तत्र तत्पदशक्तिग्रहस्तु बुद्धिविषयता-वच्छेदकावच्छिन्ने बुद्धिविषयतावच्छेदकत्वं घटत्वादीना-मनुगतमेकं, तस्य मोषात्, घटत्वादिनैव घटादिस्मरणं शाब्दबोधश्चेति कश्चित् ।

अन्ये तु बद्धिविषयत्वादिनैव शक्तिः । बुद्धिविषय-त्वेनैव शाब्दबोधः । यद्धर्मविशिष्टे बुद्धिविषयत्वज्ञानं तद्धर्मविशिष्टमानयतीत्याहुः ।

अपरे तु घटत्वादिलघुधर्मविशिष्टे तत्पदशक्तिस्वी-कारात्, नानैव शक्तयः गुरुधर्मविशिष्टे तु लक्षणा । यदुघ-

र्मविशिष्टे बुद्धिविषयत्वज्ञानं तद्धर्मविशिष्टं बोधयतीति वदन्ति । इदम्पदस्य प्रत्यक्षविषयतावच्छेदकावच्छिन्ने, एतत्पदस्य पर्याप्तिसंबन्धेन समीपवर्तितावच्छेदकावच्छिन्ने, अदः पदस्य विप्रकृष्टवर्तितावच्छेदकावच्छिन्ने, सर्वपदस्य पर्याप्तिसम्बन्धेन बुध्यवच्छिन्ने शक्तिः । सर्वेषु घटेषु द्रव्यत्वमित्यत्र घटपर्याप्तबुध्यवच्छिन्ने द्रवत्वमिति बोधः। सर्वेषु घटेषु रूपमित्यादौ कस्यापि रूपस्य सर्वघटवृत्तित्वाभावेन सर्वपदस्य व्यापकत्वे लक्षणा ।

वस्तुतस्तु सर्वशब्दस्य तत्तद्बुद्धिविषयतापर्याप्ते शक्तिः। सर्वान् घटान् नयेत्यत्र प्रकरणात् स्वगृहवृत्तित्वेन घटादेरुपस्थितत्वात् तादृशबुद्धिविषयान् घटान् नयेत्यर्थः। एवं तत्र तत्र बोध्यम् । सर्वेषु घटेषु रूपमित्यत्र तादृशं बुद्धिपर्याप्तेषु न रूपान्वयः। किं तु सर्वशब्दस्य लक्षणया तादृशबुद्धिविषये रूपान्वयः ।

वस्तुतो घटेषु रूपमित्यत्र बहुत्वान्वयिषु घटेषु रूपान्वयवत् सर्वेषु घटेषु रूपमित्यत्रापि रूपान्वयः ।

किं पदस्य जिज्ञासाविषयत्वविशिष्टे। अतः किं पचतीति वाक्याज्जिज्ञासाविषयकर्मकपाकानुकूलकृतिमानिति बोधः। अत एव तण्डुलं पचतीत्यस्य जिज्ञासानिवर्त्तकत्वम्।

युष्मत्पदस्य तत्कालीनसम्बोध्यचैत्रत्वादिविशिष्टे शक्तिः। सम्बोध्यत्वं त्वनुगमकं न तु शाब्दबोधविषयः।

अस्मत्पदस्य तत्कालीनाहम्पदस्वतन्त्रोचारयितृचैत्रादि विशिष्टे शक्तिः । यदा यच्छरीरावच्छिन्नोऽहम्पदेस्वतन्त्रोच्चारयिता तच्छरीरावच्छिन्नस्याहम्पदेन भानम् ।

अत एवं वाच्यस्त्वया मद्वचनात् । सरोजेत्यादौ नाहम्पदात् कालिदासादेर्भानम्। तेषामहंपदस्वतन्त्रोचा-

रयितृत्वाभावात् । न च मैत्रोच्चारयिता चैत्रोऽहमिति जानातीति वाक्यान्मैत्रबोधापत्तिः । तस्याहम्पदे स्वतन्त्रोच्चारयितृत्वसत्त्वादिति वाच्यम् । अन्यबोधाभिप्रायेणानुच्चारयितृत्वरूपस्वातन्त्र्यस्य तत्राभावात् । न च चैत्रस्यापि बोधो न स्यात् तस्याहंपदे स्वतन्त्रोच्चारयितृत्वाभावादिति वाच्यम् । तत्राहंपदलक्षणया तादृशबोधाङ्गीकारात् । वयं गच्छाम इत्यत्र स च त्वं चाहं चेति वयमिति एकशेष इति न दोषः ।

केचित्तु सीतायाः स्वतन्त्रोच्चारयितृत्वाभावेन तस्या बोधाभावापत्त्यानुवादरूपाहम्पदमात्रस्योच्चारयितृत्वावच्छेदकावच्छिन्नबोधकत्वम् । अनुवादरूपाहंपदे तु यस्य यस्य बोधोऽनुभवसिद्धस्तत्तद्व्यक्तित्वेन तत्तद्बोधकत्वम् । अन्यबोधाभिप्रायेणोच्चारयितृत्वमनुवादत्वमिति दिक् ।

स्वतन्त्रोच्चारयितृत्वेन ज्ञातृबोधकत्वम् । अहंपदे सीतायास्तु तत्क्रमादेव बोध इति मिश्रानुयायिनः ।

लक्षणा च न शक्यादशक्योपस्थितिः । उपस्थितिप्रयोजिका हि लक्षणा न तु सैव । अत एवाशक्ये तात्पर्यमपि लक्षणा न । तात्पर्यनिर्वाहिका हि लक्षणा न तु तात्पर्यात्मिकैव । शक्तेरपि तत्त्वापत्तेः । अन्वये तात्पर्यस्यापि लक्षणापत्तेश्च । किं तु स्वशक्यसम्बन्धः । सा च द्विविधा । गौणी तदन्या च । तत्र सादृश्यात्मकः शक्यसम्बन्धो गौणी । यथा राज्ञि ऋषिशब्दस्य । तदन्या च तीरादौ गङ्गापदस्य ।

व्यञ्जना च न वृत्त्यन्तरम् । गच्छ गच्छसीत्यादौ गमनाभावे तात्पर्यान्यथानुपपत्त्या कस्य चित् पदस्य लक्षणयैव बोधसंभवात् । अन्येषां पदानां तात्पर्यग्राहकत्वात् ।

न च सत्यपि बाधग्रहे क्वचिदर्थविशेषाणां प्रतीतिरस्ति। सा च न लक्षणया, लाक्षणिके बाधस्याविरोधित्वात् प्रतिबध्यतावच्छेदके दोषविशेषाजन्यत्ववत् व्यञ्जनाजन्यत्वस्यापि दानादिति वाच्यम् । वृत्तिविशेषाजन्यत्वस्यैव प्रतिबध्यतावच्छेदके निवेशात् । किं वृत्यन्तरेणेति दिक् ।

सा च लक्षणा द्विविधा जहत्स्वार्थाऽजहत्स्वार्था च । यत्र स्वार्थस्य न भानं तत्र जहत्स्वार्था । यथा गङ्गापदस्य तीरत्वेन लक्षणा। गङ्गापदस्य गङ्गातीरत्वेन लक्षणा अजहत्स्वार्था । काकपदस्य दध्युपघातकत्वेन लक्षणाप्यजहत्स्वार्था । स्वशक्यसाधारणरूपेण लक्षणाऽजहत्स्वार्था । स्वशक्यावृत्तिलक्ष्यतावच्छेदकविशिष्टलक्षणा च जहत्स्वार्था ।

लक्षितलक्षणा च स्ववाच्यघटितसम्बन्धेन लक्षणा । यथा द्विरेफपदे रेफद्वयवत्पदवाच्यत्वसम्बन्धेन लक्षणा ।

सा च जहत्स्वार्थेति केचित् ।

परे तु यत्र शक्यतावच्छेदकरूपेण न शक्यभानं सा जहत्स्वार्था । यत्र येन केन चिद् रूपेण शक्यभानं तत्राजहत्स्वार्थेति ।

यत्तु द्विरेफपदे द्विपदं तात्पर्यग्राहकं रेफपदेन भ्रमरपदं लक्ष्यते तेन भ्रमरबोध इति। तन्न । द्विरेफपदोत्तरविभक्त्यर्थस्य तत्रान्वयाप्रसङ्गात् । तस्याप्रकृत्यर्थत्वात् । विभक्त्यन्तभ्रमरपदे तु लक्षणया न दोष इति ध्येयम् ।

अनादिप्रयोगानुसारिणी लक्षणा निरूढलक्षणा । यथा नीलपदस्य नीलवति ।

यत्र मानान्तराद्वक्त्र्यर्थसंबन्धिनि तात्पर्यमवधार्यते

तत्र रूढिपूर्विका लक्षणा । यथा मण्डपपदस्य, गृहसम्बन्धिनि पुरुषे यत्र न तात्पर्यं तत्र योगादेव पुरुषान्वयबोधः ।

ननु स्वर्गकामो यजेतेत्यत्र योगात् स्त्रीशूद्रयोरपि अधिकारापत्तिरिति चेन्न। तयोर्विद्यानिषेधेन स्वर्गकामपदसंकोचेन तदतिरिक्तस्वर्गकामग्रहणात् ।

परे तु अध्ययनजन्यज्ञानवन्तमादाय क्रतुविधयश्चरितार्था नान्यस्य विद्यामाक्षिपन्ति तेन न तेषामधिकार इति दिक् ।

लक्षणाबीजं तात्पर्यानुपपत्तिः। न तु शक्यान्वयायोग्यत्वम् । यष्टीः प्रवेशयेत्यादावभावात् । तात्पर्यविषयशक्यान्वयानुपपत्तिस्तत्रापीति चेन्न। तात्पर्यविषयशक्यान्वयानुपपत्त्यपेक्षया तात्पर्यानुपपत्तिरेव लाघवाल्लक्षणाबीजमिति केचित् ।

अन्ये तु मुख्यार्थान्वयानुपपत्तिः क्वचित्तात्पर्यानुपपत्तिर्लक्षणाबीजम् । तथा हि मुख्यार्थान्वयानुपपत्तिज्ञानं न लक्ष्यार्थान्वयबोधे कारणं किं तु गङ्गापदं शक्यसम्बन्धेन घोषान्वितार्थोपस्थापकं घोषानन्वितमुख्यार्थकत्वे सति घोषान्वितार्थबोधकत्वेन तात्पर्यविषयकत्वादिति क्रमेण मुख्यार्थान्वयानुपपत्त्या लक्षणाकल्पनम् । ततश्च लक्ष्यार्थान्वयबोधः । एवं गङ्गापदं तीरबोधकं तीरबोधकत्वेन तात्पर्यविषयकत्वादित्यनुमितेस्तन इदं पदं शक्यसम्बन्धेन तीरोपस्थापकतया तीरबोधकं तीरशक्तत्वेनागृह्यमाणत्वे सति तीरबोधकत्वादिति क्रमेण तात्पर्यानुपपत्त्या लक्षणाकल्पनम् । एवं च लक्षणाकल्पकत्वेन द्वयोरप्युपयोगः । काल्पकाननुगमस्यादोषत्वात् । वन्हौ धूमालोकवदित्याहुः ।

ननु गङ्गापदस्य तीरे शक्त्यभावेनासाधुत्वापत्तिरिति चेन्न । वृत्तिमत्त्वं पदसाधुत्वं न तु शक्तत्वम् । लाक्षणिकस्यापि साधुत्वादिति केचित् ।

परे तु न वृत्तिमत्त्वं साधुत्वं केवलप्रकृतिप्रत्यययोर्बोधति ग्राम ग्राम इत्यादेः साधुत्वापत्तेः किं तु व्याकरणपरिगृहीतत्वम् । न च साधुशब्दव्युत्पादकत्वमेव व्याकरणत्वमित्यन्योऽन्याश्रयः । तावदध्यायकूटस्यैव व्याकरणत्वादित्याहुः ।

एवं पङ्कजपदं पद्मत्वविशिष्टे शक्तमनुपपत्त्यादिज्ञानं विनापि पद्मत्वविशिष्टबोधकत्वात् । न च पद्मत्वेन रूपेणानुभवस्तु सन्दिग्धः पद्मानुभवस्तु पङ्कजनिकर्तृत्वेन योगादेवेति वाच्यम् । योगेन कुमुदादावपि धीप्रयोगप्रसङ्गात् । रूढिस्वीकारे तु पद्मत्वविशिष्टे रूढिज्ञानस्य पद्मान्यविशेष्यकबोधप्रयोगयोः प्रतिबन्धकत्वान्न दोष इति प्राञ्चः ।

चिन्तामणिकृतस्तु व्यक्तिवचनानां सन्निहितपरत्वनियमेन प्रत्ययेनाश्रयवाचकेन पद्मत्वविशिष्टरूढ्योपस्थितपद्मत्वविशिष्टं पङ्कीयोत्पत्त्याश्रयत्वेन बोध्यते । पङ्कवाचकपदोत्तरधातोरुत्पत्तिवाचकत्वाद्रूढिज्ञानजन्यपद्मत्वोपस्थितिकालीनशक्तिजन्यावयवोपस्थितेः । पङ्कजविशेष्यकपङ्कीयोत्पत्त्याश्रयत्वप्रकारकशाब्दबोधत्वस्य कार्यतावच्छेदकत्वेन न तदा कुमुदबोध इत्याहुः । तन्न । रूढिज्ञानाभावकालीनबोधवद् रूढिज्ञानकालेऽपि सामान्यसामग्र्या कुमुदबोधवारणाय रूढिज्ञानकालीनपङ्कजनिकर्तृत्वप्रकारकबोधे रूढिजन्यपद्मोपस्थितेर्विशेष्यतया हेतुत्वं वाच्यम् । रूढिज्ञानाभावकालीनतादृशबोधे तु तादृशोपस्थितेरभावस्य हेतुत्वं वाच्यम् । तदपेक्षया रूढिप्रतिबन्धकस्यैव सम्यक्त्वादिति दिक् ।

परे तु पङ्कजपदस्य पद्मत्वविशिष्टबोधार्थं न शक्तिः । डप्रत्ययस्य पद्मत्वविशिष्टे निरूढलक्षणया तादृशबोधसम्भवात् । नापि कुमुदज्ञानप्रतिबन्धार्थम् । डप्रत्ययनिरूढलक्षणायाः तादृशबोधप्रतिबन्धकत्वसम्भवादिति । तन्न । एकपदोपस्थाप्यानामभेदान्वयस्याव्युत्पन्नत्वेन पङ्कजनिकर्तृपद्ममिति बोधासम्भवादिति दिक् ।

अत्र मीमांसकाः । पङ्कजप्रयोगनियतविषयपद्मानुभवजन्यसंस्कारादेव पद्मविशिष्टस्मरणसम्भवान्न तदर्थं शक्तिः । अवयवशक्तिग्रहकाले पद्मत्वविशिष्टोपस्थित्या तेन रूपेण पङ्कजपदात् स्मृतेः । नाप्यनुभवार्थम् । तच्छाब्दबोधे तदन्वयप्रतियोगिशक्तपदत्वेनावयवैरेवानुभवसम्भवादिति । तन्न पङ्कपदस्य पङ्कशक्तिर्यथा व्यवहारात्तथा पङ्कजपदस्यापि शक्तेरनिवार्यत्वात् । यद्धर्मावच्छिन्नवृत्तिजन्यपदार्थोपस्थितेस्तद्धर्मावच्छिन्नशाब्दबोधसामान्ये हेतुत्वाच्च । किं च रथकारशब्दस्यापि जातिविशेषावच्छिन्ने शक्तिर्न स्यात् । पद्मविशिष्टबोधवज्जातिविशेषावच्छिन्नबोधस्यापि सम्भवात् । तथा च वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रूढ्या जातिविशेषावच्छिन्नस्य शीघ्रमुपस्थितत्वात् तस्यैवाधानं विधीयते इति व्याकोपश्च स्यादिति दिक् ।

अपरे तु तद्बोधकत्वं तत्र तत्साधुत्वं पङ्कजपदस्य कुमुदाबोधकत्वेन तत्र साधुत्वाभावादेव न कुमुदबोध इति तन्न । साधुत्वज्ञानस्य शाब्दबोधेऽहेतुत्वात् । बाधतीत्यादितोऽपि बोधापत्तिरिति चेन्न । व्याकरणानिष्पन्नत्वरूपासाधुत्वनिश्चयेन प्रतिबन्धात् । यद्वा साधुत्वनिश्चयेऽपि अपभ्रंशाच्छाब्दबोधस्य जायमानत्वात् स न प्रतिबन्धक इति । नन्वपभ्रंशानां बोधकत्वात्तेषु व्यवहारा-

च्छक्तिरनिवार्या। न च लक्षणया तेषां बोधकत्वम्। शक्याभावेन तस्या अभावात्। न चापभ्रंशस्मारितसाधुशब्दादेवार्थप्रत्ययः। साधुशब्दमजानतां पामराणां ततोऽर्थप्रत्ययात्। न च शक्तिभ्रमाद्बोधकत्वम्। शक्तिग्राहकस्य व्यवहारस्योभयत्र सत्त्वात्। अन्यथा वैपरीत्यस्यापि सुवचत्वादिति चेन्न। एकशक्त्यारोपेणाप्युपपत्तौ नोभयत्र शक्तिः, गौरवात्। न चापभ्रंशे शक्तिः संस्कृते शक्त्यारोपोऽस्त्विति वाच्यम्। अपभ्रंशानां देशभेदेन नानात्वादनेकशक्तिकल्पने गौरवापत्तेः। संस्कृतस्य सर्वत्रैकत्वात्। अत एव प्राकृतेऽपि न शक्तिः। तस्यापि नानात्वाच्छक्तिबाहुल्ये गौरवात्।

परे तु प्रत्येकमपभ्रंशेन विनिगमनाविरहात् तत्रापि शक्तिः। न च तेषां यज्ञे प्रयोगापत्तिः। साधुभिर्भाषितव्यमित्यत्र साधुशब्दस्य साधुविशेषसंस्कृते तात्पर्यादित्याहुः।

ननु शक्तेरीश्वरेच्छात्वेनातिरिक्तपदार्थत्वेन वा न ज्ञानं हेतुः। नैयायिकानां मीमांसकानां च शाब्दबोधत्वावच्छिन्ने तेन तेन रूपेण कारणत्वे व्यभिचारात् तद्धिजनकतावच्छेदकसम्बन्धवत्त्वेन ज्ञानं हेतुस्तथा च तद्धिजनकत्वज्ञानमेव बोधे हेतुरस्तु। न चैवं लक्षणोच्छेदे गङ्गापदाद् विलम्बेन तीरधीर्न स्यादिति वाच्यम्। पूरज्ञापकत्वेन ज्ञानात् पूरोपस्थितौ तत्र घोषबाधग्रहे गङ्गापदस्य कुत्र तात्पर्यमिति गवेषणेन विलम्बात्। यत्र भूरिप्रयोगस्तत्र शक्तिरिति व्यवहारः। यत्र न भूरि प्रयोगस्तत्र लक्षणेति व्यवहारसम्भवात्। तृणारणिमणित्ववच्छेदकाऽग्रहेऽपि स्वरूपयोग्यतारूपवह्निजनकताग्रहवत्तद्धिस्वरूपयोग्यतारूपजनकता सुग्रहैवेति चेन्न। अपभ्रंशस्यापि तद्धिजनकतयार्थवत्त्वेन तत्र विभक्त्यापत्त्या साधुत्वापत्तिरिति केचित्।

चिन्तामणिकृतस्तु देवदत्तादिपदार्थबुद्धौ सङ्केतस्य कारणत्वकल्पनात् । अन्यत्रापि तत्कारणत्वकल्पनम् । न च सादिपदजन्यशाब्दबोधे सङ्केतज्ञानं हेतुर्नान्यत्रेति वाच्य-म् । लाघवेन शाब्दत्वावच्छिन्ने तद्धेतुत्वादित्याहुः । लक्षणा च पदवृत्तिः, वृत्तित्वात्, शक्तिवत् ।

ननु गभीरायां नद्यां घोष इत्यादौ पदे लक्षणाऽसम्भवाद् वाक्ये लक्षणाङ्गीकारेण नायं नियमः । तथाहि गभीरपदस्य न तीरे लक्षणा । नद्यनन्वयापत्तेः । नामार्थयोरभेदान्वयेनात्र बाधितत्वात् । नापि गभीरतीरे लक्षणा । नद्यास्तीरेऽन्वयासम्भवेन गभीरायामन्वयो वाच्यः । स च न सम्भवति एकदेशेऽभेदेनान्वयासम्भवात् । नापि नदीपदस्य तीरे गभीरायामित्यस्यानन्वयात् । तस्मात् सप्तम्यन्तवाक्यस्यैव गभीरनदीतीरे लक्षणा । न च शक्याभावेन स्वशक्यसम्बन्धरूपलक्षणाया असम्भव इति वाच्यम् । स्वबोध्यसम्बन्धस्यैव लक्षणात्वादिति चेन्न । गभीरायां नद्यामिति नदीपदोत्तरसप्तमीसहितस्य गभीरनदीतीरे लक्षणायां तत्राधारताप्रत्ययो न स्यात् । तदुत्तरसप्तम्यभावात् । नदीपदोत्तरसप्तमीरहितस्याबोधकत्वादेव न लक्षणा । यद्यपि सप्तमीसहितस्य गभीरनदीतीराधारत्वे लक्षणा सम्भवति तथाप्येकपदस्य तात्पर्यग्राहकत्वेनापरपदलक्षणयैव शाब्दबोधसम्भवेन पदद्वयलक्षणायां मानात् ।

एवं राजपुरुषमानयेत्यत्र राजपदस्य राजसम्बन्धिनि लक्षणया राजसम्बन्ध्यभिन्नः पुरुषबोधसम्भवान्न तत्रापि वाक्ये लक्षणा । न चैवं कर्मधारयापत्तिः । समासपूर्वदशायां पदयोस्तुल्यार्थत्वाभावात् । न च राज्ञः स्वामित्वेन तन्निरूपकत्वरूपसम्बन्धेन वा पुरुषेऽन्वयोपपत्तौ किं लक्षण-

येति वाच्यम् । नामार्थयोर्भेदान्वयानङ्गीकारात् । अन्यथा राजसम्बन्धः पुरुष इत्यत्र तथा बोधापत्तेरित्यन्ये ।

परे तु लुप्ता षष्ठ्येवान्वयबोधिका षष्ठीलोपमजानतस्तु शक्तिभ्रमादन्वयबोध इत्याहुः ।

कश्चित्तु समासातिरिक्तस्थले नामार्थयोरभेदान्वयानङ्गीकाराद् विग्रहसमासयोः समानार्थकत्वार्थं राजपदस्य राजसम्बन्धे लक्षणेत्याह ।

एवं चित्रगुमानयेत्यत्र गोपदस्य चित्रगोस्वामिनि लक्षणयैव बोधसम्भवान्न तत्रापि वाक्ये शक्तिः । न च चित्रपदस्यैव तादृशार्थे लक्षणा गोपदं तात्पर्यग्राहकमिति वाच्यम् । गोपदोत्तरविभक्त्यर्थकर्मत्वस्य तत्रान्वयापत्तेः । न च तत्पुरुषे पुरुषपदस्य राजसम्बन्धिपुरुषे लक्षणा राजपदं तात्पर्यग्राहकमस्त्विति वाच्यम् । अर्थबोधकत्वेन सार्थकत्वे सति तात्पर्यग्राहकत्वेन सार्थकत्वस्यानङ्गीकारात् । न च तद्धनमित्यत्र सर्वनाम्नि लक्षणाभावेनोत्तरपदलक्षणेति वाच्यम् । तस्य लघुन्येव शक्तिरन्यत्र लक्षणेत्यस्याभिहितत्वात् । न च बहुव्रीहावपि गोपदस्य गोस्वामिनि चित्रपदस्य चित्रसम्बन्धिनि लक्षणया गवि चित्रसम्बन्धिनोऽभेदेनान्वयसम्भवात् पदद्वयस्यार्थबोधकत्वेनैव सार्थकतास्त्विति वाच्यम् । एकदेशान्वयस्यास्वीकारात् पदद्वये लक्षणायां गौरवाच्च । अत एव चित्रपदस्य चित्रवत् सम्बन्धिनि गोपदस्य गोस्वामिनि लक्षणा निरस्ता ।

वैयाकरणास्तु बहुव्रीहौ शक्तिरेव । अन्यथा घटपदेऽपि टकारलक्षणया बोधसम्भवाच्छक्त्यभावापत्तेरित्याहुः । तन्न । समासान्तरेऽपि तुल्यत्वात् । किं च समासे शक्तिस्वीकारेऽर्थवत्त्वेनैव समासस्य प्रातिपदिकत्वसिद्धौ समासग्रहणमनर्थकं स्यादिति दिक् ।

शिंशपावृक्ष इत्यादिकर्मधारये न शक्तिर्न वा लक्षणा । नामार्थयोरभेदान्वयेनैव बोधसम्भवात् । अत एव तत्पुरुषात् कर्मधारयो लघीयानिति निषादस्थपतेरधिकार इति तस्याप्युपयुक्तवेदाध्ययनं कल्प्यते । साङ्गेष्टिविधानेन मन्त्राध्ययनस्यापि विधानेन निषेधस्य विध्यस्पृष्टपरत्वात् । अत एव नान्यमन्त्राध्ययनं तस्येति दिक् ।

ननु विशेषणं विशेष्येण बहुलमिति सूत्रे विशेषणादि समस्यत इत्येतावतैव समासबलादेव विशेष्यादिग्रहणे सिद्धेऽन्यतरपदवैयर्थ्यापत्त्या विशेषणतावच्छेदकयोर्व्यभिचार एव कर्मधारय इति ज्ञायते । तथा च कथं शिंशपावृक्ष इत्यत्र कर्मधारयः । परस्परव्यभिचाराभावादिति चेत् ।

अत्र केचित् ज्ञापकवशाद्विशेष्यतावच्छेदक एव व्यभिचारे कर्मधारयाभिधानात् । न तु परस्परव्यभिचारे कर्मधारयाभिधानं गौरवात् । न चैवं तक्षकः सर्प इत्यादावपि स्यादिति वाच्यम् । तत्र बहुलग्रहणेनैव समासनिषेधात् । अत एव वृत्तिकारैरपि वृक्षः शिंशपेत्येव प्रत्युदाहृणं दत्तम् । न च विशेषणस्य पूर्वनिपातविधायकसूत्रेणैव तादृशप्रयोगवारणे विशेषणं विशेष्येण बहुलमितिसूत्रेऽन्यतरपदवैयर्थ्यं तदवस्थमिति वाच्यम् । विशेषणविशेष्यभावस्य कामचारत्वेन वृत्तपदस्यापि विशेषणत्वसम्भवात् । न चैवं विशेषणविशेष्यभावस्य कामचारत्वे उत्पलं नीलमिति प्रयोगापत्तिः । तादृशप्रयोगे उत्पलस्य विशेषणत्वविवक्षायां प्रामाणिकैरपीष्टापत्तेः स्वीकारात् । अत एव चन्द्रमुखमुखचन्द्रपदयोः साधुत्वमिति दिक् ।

यत्तु लोकप्रसिद्धमेव विशेषणं तद्वाचकमेव सूत्रे विशेषणपदमित्याह । तन्न । लोकपदस्य यावदेकदेशविकल्पग्रासात् ।

केचित्तु विशेष्यतावच्छेदकसमानाधिकरणाभाव-प्रतियोगित्वेनैव विशेषणत्वादुत्पलनीलनीलोत्पलयोरपि साधुत्वम्। न चैवं वृक्षशिंशपादिप्रयोगस्य विशेषणपूर्व-निपातेनैव वारणे सूत्रेऽन्यतरपदवैयर्थ्यमिति वाच्यम्। बहुलग्रहणेनैव क्वचिन्नित्यसमासः, कृष्णसर्पः, लोहित-शालिः। क्वचिन्न रामो जामदग्न्यः, व्यासः पाराशर्य इत्या-द्यनिष्टप्रयोगव्वारणस्येष्टत्वादित्याहुः।

यच्चोक्तं शब्दकौस्तुभे। उपसर्जनमिति तावदन्व-र्थसंज्ञेत्युक्तम्। अप्रधानमुपसर्जनमिति। तदिह जाति-गुणशब्दयोः सन्निपाते गुण एव विशेषणं तस्य द्रव्याव-च्छेदद्वारैव क्रियानिवर्तकत्वात्। श्रौतव्यवहारेऽप्येवम्। श्वेतं छागमालभेत इति हि चोदनायां श्वेतच्छागालाभे कृष्णच्छाग आलभ्यते न तु श्वेतमपि पश्वन्तरम्। क्रिया-जात्योरप्युपनिपाते एवमेव। तेन नीलोत्पलं पाचक-ब्राह्मण इति व्यवस्थित एव प्रयोगः। यत्र तु गुणशब्दयोः क्रियाशब्दयोः गुणक्रियाशब्दयोर्वा निपातस्तत्रापि नियम एव। खञ्जकुब्जः याजकपाठकः पाठकपाचकः पाचकखञ्ज इति। शिंशपावृक्ष इत्यत्र तु शिंशपात्वस्य व्याप्यत्वाद् वृक्ष-त्वस्य व्यापकत्वात् विशेषणविशेष्यभावव्यवस्था स्पष्टैव।

तदसत्। यत् साक्षात्क्रियान्वयि तत्प्रधानं यत्परं-परया क्रियान्वयि तदप्रधानम्। एतावतैव श्रौतव्यवहा-रनिर्वाहे विशेषणविशेष्यभावकामचारस्य दुर्वारत्वात्। नीलोत्पलमुत्पलनीलं तिष्ठतीत्यादौ साक्षात्क्रियान्वयि-त्वस्य कदाचित् नीले कादाचिदुत्पले सम्भावाद्विशेषणवि-शेष्यभावकामचारादुत्पलनीलं नीलोत्पलमिति प्रयोगः साधुरेव। एवं पाचकब्राह्मण इत्यादिष्वृह्यम्।

यच्चोक्तं शिंशपात्वस्य वृक्षत्वव्याप्यत्वाद् शिंशपाविशेषणमेवेति । तदपि न विशेषणविशेष्यभावस्य कामचारत्वेन व्यवस्थायोगात् । अन्यथा प्रमेयः पदार्थ इत्यत्र विशेषणविशेष्यभावापत्तिरिति दिक् ।

उपकुम्भमर्द्धपिपलीत्यादावुत्तरपदलक्षणयैवोपपत्तौ न शक्तिर्न वाक्ये लक्षणा । पाणिपादं वादयेत्यत्र पाणिपादमात्रप्रतीतेर्न वाक्ये लक्षणा । समाहारसंज्ञा तु न समाहारबोधकत्वेन नदीवृध्यादिवत् परिभाषिकी । न च द्विवचनापत्तिः । असाधुत्वात् ।

परे तु पाणिपादं पाणिप्रतियोगिकं पादपदं पदप्रतियोगिकं समाहारं लक्षयति । तत्र परंपरया वादनकर्मान्वयः समाहारस्तु तुल्यवदेकक्रियान्वयित्वरूपं साहित्यम् । सेनावनादिवदपेक्षाबुद्धिविशेषविषयत्वं वेत्याहुः । इतरेतरद्वन्द्वे तु धवखदिरावित्यादौ धवखदिरमात्रप्रतीतेर्न लक्षणा शक्तिर्वेति दिक् ।

नञ्तत्पुरुषेऽप्यघटः पट इत्यत्र घटपदं घटसंम्बधिनो लक्षकं नञ्पदमन्योन्याभाववतो लक्षकं ससम्बन्धिस्थले चैत्रस्य नप्तेत्यादौ एकदेशान्वयस्वीकारात् । तथा च घटसंबन्ध्यभिन्नान्योन्याभाववदभिन्नः पट इति बोधः ।

परे तु चैत्रस्य नप्तेत्यादौ पुत्रपुत्रे षष्ठयर्थे सम्बन्धस्यान्वयाङ्गीकारात् । अघटः पट इत्यादावन्योन्याभाववत्येव घटसम्बन्धिनोऽन्वयः । अत एव घटं भूतलमित्यादौ समानविभक्तिकतेत्याहुः ।

अन्ये तु निपातातिरिक्तनामार्थयोरेव भेदातिरिक्तसम्बन्धेनान्वयानङ्गीकारेणाघटः पट इत्यत्र घटस्य प्रतियोगितयाऽन्योन्याभावे तस्य चाधिकरणतया पटे

अन्वयबोधसम्भवान्नात्र लक्षणा । अत एव चन्द्र इव मुखमित्यत्रेवार्थे सादृश्ये प्रतियोगितया चन्द्रान्वयः । न च घटो नास्तीत्यत्र कथं घटान्यताभावबोधो नञो ऽन्योन्याभावे शक्तत्वादिति वाच्यम् । अन्योन्याभावसंसर्गाभावसाधारणाभावत्वस्य शक्यतावच्छेदकत्वात् । यत्राधिकरणप्रतियोगिवाचकपदयोः समानविभक्तित, तत्र तादात्म्यसंबन्धावच्छिन्नप्रतियोगितया नञर्थे प्रातिपदिकार्थान्वयेन तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वेनाभावबोधादन्योन्याभावबोधः । यत्र चाधिकरणवाचकपदे सप्तमी तत्र तादात्म्यातिरिक्तसंयोगादिसंबन्धावच्छिन्नप्रतियोगितया नञर्थे प्रातिपदिकार्थान्वयेन तत्र संसर्गाभावबोधः । अन्योन्याभावत्वेनान्योन्याभाववत्संसर्गाभावत्वेनापि संसर्गाभावे शक्तिस्वीकाराद्वा ।

न चैवं चैत्रो न पचतीत्यादौ संसर्गाभावबोधो न स्यादधिकरणवाचकपदे सप्तम्यभावादिति वाच्यम् । विभक्त्यर्थस्य नञर्थे तादात्म्यातिरिक्तसंबन्धावच्छिन्नप्रतियोगितयैवाकाङ्क्षावशादन्वयेन तत्रापि संसर्गाभावबोधात् । अतोऽस्यकालिकसंबन्धेन स्वार्थप्रकारकान्वयबोधाजनकत्ववत्तादृशसमभिव्याहारस्यापि न तादात्म्यसंबन्धावच्छिन्नप्रतियोगितासंबन्धेन नञर्थे प्रकारतयाऽन्वयबोधजनकत्वम् । अत एव कालं पचतीति न प्रयोगः । एवं न नञर्थस्य भेदेन धात्वर्थे प्रकारतयाऽन्वयः । अतो घटो न पश्यति चैत्रइत्यादितो घटाभावं पश्यति चैत्र इति बोधः । एवं नञर्थस्योद्देश्यतयापि न बोधः । अत एव चैत्रस्य न ग्राम इत्यादितश्चैत्रस्वत्वाभावो ग्रामे इति न बोधः । न च घटोनास्तीति अत्र घटाभावोस्तीति बोधाङ्गी-

कारे भावनया अन्वय्यभावे एवाख्यातोपस्थितसंख्याया अन्वयः स्यात्तथा च घटौ नास्तीति प्रयोगापत्तिर्द्वित्वावच्छिन्नप्रतियोगिताकघटाभावस्यैकत्वादिति वाच्यम् । भावनान्वय्यभावप्रतियोगिन्येव संख्यान्वयः समभिव्याहारविशेषबोधनादित्याहुः ।

परे तु भूतले घटो नास्तीत्यत्र नाभावविशेष्यको बोधः । किं तु भूतलवृत्तित्वास्तित्वाभाववान् घट इत्याख्याताश्रयत्वप्रकारको घटविशेष्यको बोध इति तत्रैव संख्यान्वयः । जातौ सत्ता नास्तीत्यत्र साक्षात्संबन्धेन जातिवृत्तित्वाभावस्य सत्तायां बोधः, सत्ता न जातिवृत्तिरित्यत्रैव । न तु भूतलवृत्त्यभावप्रतियोगिघटोऽस्तीति बोधः, क्वेति साकाङ्क्षतापत्तेरित्याहुस्तन्न ।

चैत्रे न पचतीत्यतश्चैत्रसमवेतत्वाभाववती पाककृतिरिति आख्यातार्थकृतिविशेष्यकबोधापत्तेरित्यपरे ।

तन्न । भवन्मतेऽपि चैत्रे पाककृत्यभाव इत्येवं बोधापत्तेः । सप्तम्यन्तकारकस्य धात्वर्थ एवान्वय इति चेत्तुल्यम् ।

अन्ये तु ननु रथो गच्छतीति प्रयोगात् नाख्यातार्थः कृतित्वेन कृतिः, किं तु व्यापारत्वेन व्यापारः । न च तत्र व्यापारे लक्षणा, विभक्तौ लक्षणानङ्गीकारात् । अन्यथा कर्मणि षष्ठीत्यानुशासनवैयर्थ्यात् । अनुशासनं विनापि गङ्गापदलक्षणावत्तस्यापि लक्षणा संभवादिति चेत् ? न । लाघवेन यत्नत्वास्याख्यातशक्यतावच्छेदकत्वेन रथो गच्छतीत्यत्र व्यापारे आश्रयत्वे वा लक्षणास्वीकारात् । एवं जानाति विद्यते निद्रातीत्यादावपि । घटो नश्यतीत्यादौ नाश्रयत्वे किं तु प्रतियोगित्वे लक्षणा । अत एवान्यदी-

यगमनानुकूलचोदनादिमति न गच्छतीति प्रयोगः । तस्य गमनाश्रयत्वाभावात् । न च विभक्तौ लक्षणा, सुब्विभक्तावभावेऽपि तिङ्विभक्तौ लक्षणायां बाधकाभावात् । यद्वानुशासनबलात् सुब्विभक्तेः सुब्विभक्त्यन्तरार्थे लक्षणाया अस्वीकारात् । कथमन्यथा कर्मणि शक्ताया द्वितीयाया घटं जानातीत्यत्र विषये लक्षणा । कथं वा वृक्षात्पततीत्यत्र विभागशक्तायाः पञ्चम्याः धूमादित्यत्र ज्ञाप्यत्वे लक्षणा । गुरुत्वजन्यतावच्छेदकजातिविशेषावच्छिन्ने पतिधातोः शक्तिः, तादृशक्रियायां जनकत्वसंबन्धेन पञ्चम्यर्थविभागान्वयेन वृक्षनिष्ठविभागजनकविलक्षणक्रियाश्रयबोधात्, विभागे पञ्चम्या शक्तिः ।

न च रथो गच्छतीत्यादावाख्यातार्थयत्नस्य बाधादनन्वयेऽपि धात्वर्थस्यैव गमनादेः रथेऽन्वयबोधोपपत्तौ किमर्थमाश्रयत्वेन लक्षणेति वाच्यम् । तण्डुलः पचतीत्यत्र तण्डुलस्य पाके कर्मतासंबन्धेनानन्वयात्, विशेष्यतासंबन्धेनाभेदातिरिक्तसंबन्धेन प्रातिपदिकार्थप्रकारकबोधं प्रति निपातसुप्तद्धितान्यतमजन्योपस्थितेः कारणत्ववत् तण्डुलं पचतीत्यादितः पाकवत्तण्डुलविषयककृतिमान् इति बोधाभावात् द्वितीयाया विषयार्थकत्वाभावात् । [1]सुबर्थस्य तिङर्थान्वयाभावे तु घटेन स्थीयते रूपमित्यतः स्थितिमद्घटजन्यं रूपमिति बोधापत्तेः । अत एव नामार्थस्याख्यातार्थान्वयाभावात् तण्डुलः पचतीत्यत्र पाकवत्तण्डुलकृतिमानिति बोधाभावेऽपि न क्षतिः । धात्वर्थप्रकारकबोधस्यापि विशेष्यतासंबन्धेन नामार्थेऽभावेन विशेष्यतासंबन्धेन धात्वर्थप्रकारकबोधं प्रति कृत्तिङाद्यन्यतरजन्योपस्थितेः करणत्वमिति न तादृशो बोध इति केचित् ।

१ अत्रत्ययन्थः किञ्चित्क्षेपपूरणमपेक्षते ।

यद्यपि ज्ञानं जानातित्यादौ ज्ञानपदेन धातुना च सर्वज्ञानोपस्थानात् धातुजन्योपस्थितिविषयरूपधात्वर्थस्यसुबर्थान्वयेपि प्रातिपदिकार्थस्य धात्वर्थस्य च तिङर्थेपि प्रकारत्वाद्द्वयोर्व्यभिचारस्तथापि घटप्रकारककर्मत्वादिविशेष्यक निरूपितत्वसंसर्गकबोधविशेषे घटमेतादृशानुपूर्वीज्ञानं हेतुः ।

एवं यादृशानुपूर्वीकाद्यादृशो बोधोऽनुभवसिद्धस्तादृशानुपूर्वीज्ञानं कारणं तादृशबोधविशेषे, बोधविशेषश्चाव्यवहितोत्तरत्वमेवेति न व्यभिचारः ।

एवं विशेष्यतासंबन्धेनाभेदसंसर्गकनामार्थप्रकारकबोधं प्रति तन्नामसमानविभक्तिकपदजन्योपस्थितिः कारणम् । तन्नामोत्तरविभक्तिविजातीयविभक्त्यसमभिव्याहृतपदजन्योपस्थितिर्वा कारणम् । तेन नीलघट इत्यस्य च संग्रहः । तण्डुलं पचतीत्यत्र विक्लृत्तिरूपं कर्मत्वं द्वितीयार्थः । सविषयकधातुयोगे तु विषयत्वं द्वितीयार्थः । व्यापारबोधकेनाख्यातेन वर्तमानत्वादिकं व्यापारे बोध्यते व्यापाराबोधकेन तु धात्वर्थे तद्बोध्यते । भविष्यदतीतत्वे आख्यातविशेषवाच्ये, तत्र भविष्यत्त्वमाद्ये व्यापारेऽतीतत्वमन्त्ये व्यापारेऽन्वेति । तेनोत्तरकृतिं प्रागभावमादाय न कृतिकाले भविष्यदर्थकाख्यातप्रयोगः । न चाद्यकृतिध्वंसमादाय भूतार्थकाख्यातप्रयोगः । तण्डुलं पचति चैत्र इत्यत्र तण्डुलः कर्मत्वे तच्च पाके स च वर्तमानत्वं च कृतावन्वेति इति तण्डुलकर्मकपाकीयवर्तमानकृतिमांश्चैत्र इति बोधः । न च वृक्षाद्भूमिं पर्णं पततीति प्रयोगापत्तिः । भूमिनिष्ठसंयोगजनकक्रियानुकूलव्यापारस्य पर्णे सत्त्वादिति वाच्यम् । पततिसमभिव्याहारेण द्वितीयायाः साधुत्वाभावात् संयोगादिफलबोधकत्वाच्चेति केचित् ।

ननु ग्रामं गच्छतीत्यादौ संयोगादिरूपफलस्य द्वितीयार्थत्वं क्रियारूपव्यापारस्य धात्वर्थत्वं तदा त्यजिगम्योः पर्यायतापत्त्या ग्रामं गच्छतीति वक्तव्ये ग्रामं त्यजति इति प्रयोगापत्तिरिति चेन्न। गमिधातुसमभिव्याहृतद्वितीयायाः संयोगरूपफलस्य त्यजिधातुसमभिव्याहृतद्वितीयाया विभागरूपफलस्य बोधकत्वस्वीकारेण नातिप्रसङ्गसंभवादिति केचित्।

द्वितीयार्थ आश्रयत्वं संयोगानुकूलं कर्म गमेरर्थः। विभागानुकूलं कर्म त्यजेरर्थः। तेन न तयोः पर्यायता, न वा तद्धातुसमभिव्याहृतद्वितीयायास्तत्तत्फलबोधकत्वस्वीकारेणानेककार्यकारणभावाः।

न च भूमौ पर्णं पततीत्यादौ भूमिपदाद् द्वितीयापत्तिः संयोगाश्रयत्वस्य भूमावपि सत्त्वादिति वाच्यम्। समभिव्याहृतधात्वर्थतावच्छेदकफलाश्रयवतो बोधकत्वस्वीकारात्।

अत एव धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति तल्लक्षणं न तु क्रियाजन्यफलशालित्वम्। वृक्षाद्भूमौ पततीत्यत्र कर्मजन्यसंयोगविभागाश्रयतया वृक्षभूम्योः कर्मतापत्तेः। न चाधःसंयोगानुकूलव्यापारस्य पतत्यर्थत्वे भूमेः कर्मत्वापत्तिरिति वाच्यम्। गुरुत्वजन्यतावच्छेदकजातिविशेषावच्छिन्नपतत्यर्थतया धात्वर्थतावच्छेदकफलाभावात्।

न च चैत्रो ग्रामं गच्छतीत्यादौ चैत्रादेः कर्मत्वापत्तिः संयोगानुकूलव्यापारस्य गम्यर्थत्वेन तदवच्छेदकसंयोगरूपफलाश्रयत्वादिति वाच्यम्। तद्धात्वर्थानधिकरणत्वेन विशेषणीयत्वादित्याहुः। तन्न। घटं जानातीत्यत्र धातो-

ज्ञानमात्रवाचकत्वेन धात्वर्थतावच्छेदकफलाभावेन घटे द्वितीयाया अभावापत्तेः । किं च यत्र मल्लमेषयोरुभयजन्यः संयोगस्तत्र मल्लो मेषं प्रति गच्छतीति न स्यात् । मेषस्य धात्वर्थानधिकरणत्वं तत्रास्ति मल्लनिष्ठक्रियानाश्रयत्वादिति चेत् ? तर्हि स्वयं स्वं प्रति गच्छतीति प्रयोगापत्तेस्तस्य मल्लादेर्मेषनिष्ठधात्वर्थानधिकरणत्वेन कर्मत्वात् । एतेन परसमवेतत्वे सति क्रियाजन्यफलशालित्वं कर्मत्वमित्यपास्तम् ।

अत्रेदं प्रतिभाति भेदो द्वितीयार्थः । कर्तरि कर्मभेदस्यापि प्रतीतेर्न तथा प्रयोगः । तथा च देवदत्तो ग्रामभिन्नः ग्रामनिष्ठसंयोगजनककर्मानुकूलकृतिमानिति बोधः । मल्लभेदस्य मल्लेऽभावाद् न तथा प्रयोगः । न च वृक्षाद्भूमिं पर्णं पततीति प्रयोगापत्तिः । भूमिभिन्नत्वे सति भूमिनिष्ठसंयोगानुकूलकर्माश्रयत्वस्य सत्त्वादिति वाच्यम् । द्वितीयायाः संयोगविभागाद्यर्थकत्वमते गमिधातुसमभिव्याहाराद् द्वितीयाया एव संयोगबोधकत्वान्न तथा प्रयोगः । न च धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति मते घटं जानातीत्यत्र कर्मत्वं घटस्य न स्यादिति वाच्यम् । एकदेशिमतेन तदभिधानात् । न च क्रियाजन्यफलशालित्वं कर्मत्वमिति मते घटे कर्मत्वानुपपत्तिरिति वाच्यम् । क्रियाजन्यत्वस्य द्वितीयार्थत्वाभावात् । किं तु संयोगविभागविषयत्वादेरेव द्वितीयार्थत्वात् । धातोश्च ज्ञानक्रियादिवाचकत्वादिति संक्षेपः ।

ननु पाकात्तण्डुलं जानातीति प्रयोगापत्तिः । द्वितीयार्थविक्लित्तिरूपफले पाकजन्यत्वस्य सत्त्वेन तद्वारणाय सुबर्थप्रकारकबोधे सुब्विभक्तिभिन्नपदजन्योपस्थितेः स-

मानविशेष्यतया हेतुत्वं वाच्यं तथा चेदं चैत्रस्य तेन क्रीतत्वादितश्चैत्रक्रयजन्यं यच्चैत्रस्वत्वमिति बोधो न स्यात् । षष्ठ्यर्थस्वत्वे जन्यत्वरूपपञ्चम्यर्थस्यानन्वयात् । न च षष्ठीभिन्ना या सुब्विभक्तिस्तद्भिन्नपदजन्योपस्थिते-र्हेतुत्वमिति वाच्यम् । भूतले घटस्येति प्रयोगापत्तेः । घटसम्बन्धे भूतलाधेयत्वसत्त्वादिति चेन्न । पञ्चम्यर्थप्र-कारकबोधे षष्ठीभिन्नसुब्भिन्नजन्योपस्थितेर्हेतुत्वात् । स-प्तम्यर्थादिप्रकारके पञ्चम्यतिरिक्तसुबर्थप्रकारके वा बोधे सुब्भिन्नजन्योपस्थितेर्हेतुत्वात् । चैत्रेण तण्डुलं पाचय-ति मैत्र इत्यादौ चैत्रनिष्ठतण्डुलकर्मकपाकीया या कृति स्तदनुकूलकृतिमान् मैत्र इति बोधः । तण्डुलः कर्मत्वे तच्च पाके स च तृतीयार्थे निष्ठत्वं च णिजर्थकृतौ सा च तिङर्थकृतौ तिङर्थकृतिश्च मैत्रेऽन्वेति । भिद्यते कुसूलः स्वयमेवेत्यादौ भेदानुकूलव्यापाररूपकर्तृत्वं भेदप्रतियो-गित्वरूपं कर्मत्वं च एकदा कुसूलेऽन्वेति । धातुना आका-ङ्क्षामर्यादया तत्कुसूलभेदव्यक्तिर्बोध्यते । किं वा तत्कु-सूलकर्मकभेदत्वेनैव लक्षणया बोध्यते । यथौदनः पक्त्वा भुज्यते इत्यादौ अतिप्रसङ्गभङ्गाय यत्रौदनकर्मिका व्यक्ति-स्तत्र चाकाङ्क्षावैचित्र्यात्पाककृतिमत्कर्तृकैव भोजनव्य-क्तिर्भासते इति भिन्नकर्तृकेऽतिप्रसङ्गः ।

आकाशं न पश्यतीत्यत्र लौकिकविषयितया आका-शचाक्षुषाश्रयत्वस्याभावो भासते । लौकिकविषयिता आकाशस्य प्रतियोगितावच्छेदकावच्छेदकः संबन्धः पश्या-मीति विषयतारूपः स्वरूपसंबन्धो व्यधिकरणः । तेना-काशघटोभयविषयविषयकचाक्षुषसत्त्वेऽपि मैत्रः आकाशं न पश्यतीति प्रयोगस्य नानुपपत्तिः । लौकिकविषयताव-च्छिन्नरूपितसमवायेनाकाशविषयकचाक्षुषाभावो भासते

शुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वान्नाकाशविषयकत्वमात्रं प्रतियोगितावच्छेदकमित्यपरे ।

रजतं पश्यामीति बलात् भ्रमे विषये लौकिकनिष्ठयता यदि तदा मेघादौ आकाशभ्रमेऽपि तादृशविषयतासत्त्वात्। आकाशनिरूपित तादृशविषयतावच्चाक्षुषाभावः समानाधिकरणसंबन्धावच्छिन्न एव बुध्यते । शशविषाणजन्यकार्मुकं नास्तीत्यत्र शशविषाणयोर्जन्यत्वरूपो व्यधिकरणः संबन्धः । तेन शशविषाणजन्यकार्मुकाभावो भासते । यद्वा । अकण्ठे कलङ्कादनङ्गे भुजङ्गादपाणौ कपालादभाले न लाक्षादित्यादौ व्युत्पत्तिवैचित्र्यात् कण्ठेकलङ्काभा इत्यादिबोधवत् प्रकृते नञर्थे प्रतियोगितयाशशपदान्वयो रुचिदत्तादिमते बोद्धव्यः । भूम्यादेरधिकरणस्यापि शशेऽन्वयात् । एवं पीतः शङ्खो नास्तीत्यादौ पीतत्वशङ्खत्वोभयावच्छिन्ना प्रतियोगिता शङ्खाभावयोः संसर्गः । यद्वा पीतत्वस्य शङ्खे समवायेन प्रतियोगितावच्छेदकसंबन्धोल्लेखवत् पीतसंयोगसंबन्धेन वा शङ्खत्वावच्छिन्नाभावबोधः ।

निर्धारणषष्ठ्या भेदोऽभेदश्चार्थः । भेदे चाप्रकृत्यर्थस्य कृष्णापदार्थस्य प्रतियोगितयान्वयः प्रकृत्यर्थस्याधिकरणत्वेनान्वितस्य प्रतियोगितया भेदेऽन्वयः । भेदश्चाप्रकृत्यर्थे प्रतियोगितयानन्विते अर्थान्तरे संपन्नक्षीरतमापदार्थे प्रकारतयाऽन्वेति संपन्नक्षीरतमा चाभेदसंबन्धेन कृष्णापदार्थेऽभेदे प्रकृत्यर्थः प्रकारतया भेदश्चाप्रकृत्यर्थे कृष्णापदार्थे प्रकारतयाऽन्वेति । एवं गवभिन्ना कृष्णा कृष्णभिन्नसंपन्नक्षीरतमाऽभिन्नेति भिन्नभिन्नविशेष्यको बोधः ।

केचित्तु गवां कृष्णा संपन्नक्षीरतमेत्यादौ च कृष्ण-भिन्नगोसामान्यभेदोऽभेदश्च षष्ठ्यर्थः। आकाङ्क्षावैचित्र्याच्च कृष्णभिन्नगोभिन्नसामान्यभेदः संपन्नक्षीरपदार्थेऽन्वेति। संपन्नक्षीरत्वावच्छिन्नत्वं च तयोः सम्बन्धः अभेदश्च कृष्णोपरि अभेदोपरि प्रकृत्यर्थो गौरन्वेति गवाभिन्नकृष्णावच्छिन्नोऽभेदश्च तादृशसंपन्नक्षीरगवाभिन्नकृष्णयोः संबन्धः। एवं च गवाभिन्ना कृष्णा कृष्णभिन्नगोसामान्यभिन्नसंपन्नक्षीराभिन्ना इति बोध इत्याहुः। तन्न। कृष्णभिन्नसामान्यभेदे क्षत्रियाणां कर्णः प्रचुरवदान्येत्याद्यनुरोधात् कर्णभिन्नभेदादौ च शक्तिकल्पने गौरवात्तेः।

अन्ये तु अभेदः षष्ठ्यर्थः स प्रकारतया क्षीरपदार्थकृष्णपदार्थयोरन्वेति गवाभिन्नकृष्णगवाभिन्न (तमयोश्च व्याप्यत्वविशिष्टव्यापकत्वविशिष्टयोर्भेदो) (वा भिन्नसंपन्नक्षीरतमा अभिन्नेति बोध इत्याहुः) (क्षीरपदार्थयोर्गोपदार्थस्याधिकरणत्वे) (स्वाधिकरणतयान्वयः। भेदाभेदयोः) (गवाभिन्नकृष्णसंपन्नक्षीर) चैत्रेण पच्यते तण्डुल इत्यादौ तृतीयार्थः कृतिः। सा च विषयत्वरूपजन्यत्वसंबन्धेन पाके स चात्मनेपदार्थे फले। एवं च चैत्रकृतिविषयपाकजन्यफलाश्रयस्तण्डुल इति बोधः। घटं जानातीत्यत्र घटविषयकवर्तमानज्ञानाश्रय इति बोधः। चैत्रेण ज्ञायते घट इत्यत्र निष्ठत्वं तृतीयार्थः। विषयत्वमाख्यातार्थः। तेन घटश्चैत्रनिष्ठवर्तमानज्ञानविषय इति बोधः।

( ) एतादृशचिन्हमध्यमध्यगतो ग्रन्थो मूलपुस्तके त्रुटितः पुस्तकान्तराभावात्तथैवात्रवस्थापितः।

प्राञ्चस्तु तृतीयार्थो वृत्तित्वं तच्च कृतावाख्यातार्थे तत्र पाकोऽपि प्रकारतयान्वेति । आख्यातार्थे धात्वर्थस्य प्रकारतयैव भानात् । तथा च चैत्रवृत्तिपाकीयकृतिविषयस्तण्डुल इति बोधः । संख्याकालाद्यतिरिक्ताख्यातार्थरूपभावनाया इतरानन्वितप्रथमान्तपदोपस्थाप्येऽन्वयस्तत्रैवाख्यातार्थसंख्यान्वयस्तेन चैत्रेण स्थियते चैत्राभ्यां स्थीयते चैत्रैः स्थीयते इत्यत्र संख्याया अनन्वयेन साधुत्वार्थं एकवचनप्रयोगोऽपि सङ्गच्छते प्रथमातिक्रमे कारणाभावात् । अत्र धात्वर्थस्य विशेष्यत्वादितरानन्वितत्वेन तत्र संख्यान्वयवारणाय प्रथमान्तदोपस्थाप्यत्वमुक्तम् । चन्द्र इव मुखमित्यत्र चन्द्रे भावनान्वय वारणायेतरानन्वितत्वमुक्तम् ।

यत्तु चन्द्रस्येतरान्वयान्निराकाङ्क्षत्वादेव न तत्र भावनान्वय इत्याह । तन्न । नीलघटं जानातीत्यत्र कर्मत्वान्वितेऽपि घटे नीलान्वयवदितरप्रकारीभूतेऽपि चन्द्रे भावनायाः प्रकारतयाऽन्वये निराकाङ्क्षत्वाभावाद्विशेष्यतयैवान्यत्र चन्द्रस्यान्वये निराकाङ्क्षत्वमिति दिक् ।

कृञश्च यत्नवाचकत्वं न तद्वाच्यो व्यापारस्तेन तदाश्रयमात्रे बीजादौ बीजं करोतीति न प्रयोगः । रथादौ च गमनकर्तृपदप्रयोगो गौणः ।

ननु कृञो यत्नवाचकत्वे पाकं करोतीत्यत्र पाककर्मकृतिकृतिमान् इति बोधः स्यादिति चेन्न । तत्राख्यातस्याश्रयत्वे लक्षणाङ्गीकारस्योभयसंमतत्वात् । चैत्रो गन्ता गतो ग्राम इत्यादौ सामानाधिकरण्यानुभावात् कर्तृकर्मणी कृद्वाच्ये । तथा च चैत्रो गमनकृतिमदभिन्नो ग्रामो गमनफलवदभिन्न इति बोधः । कृदर्थैकदेशकृतौ

फले च धात्वर्थस्यान्वयः, आकाङ्क्षावशान्मैत्रस्य नप्ते-
त्यादाविव । न च धातूत्तरप्रत्ययत्वेनैव कृतौ शक्तिः,
पाचकादिपदे निरूढलक्षणेति वाच्यम् । भावकृतोऽपि
कृतिवाचकतापत्तेः । न चैत्रः पक्तेत्यत्र पाककृतिमान्
चैत्र इत्येवान्वयबोधात् सामानाधिकरण्यमसिद्धम् । न
च नामार्थकृतेर्भेदेनान्वयासम्भवः । अर्थवदधातुरप्रत्यये-
त्यत्र कृत्प्रत्ययव्यावृत्तस्यैव नामत्वादिति वाच्यम् ।
भोक्ता तृप्यतीत्यादौ अन्वयप्रसङ्गात् । भोजनकृतेस्तदा-
श्रयत्वाभावात् । यदि च तत्र कृतिलक्षणया कृत्या-
श्रयः तृप्यतीति बोधादन्यत्र कृतेर्भेदेनोक्तरीत्यान्वये न
बाधकं तदा कृतौ शक्तिरनिवार्या लाघवात् । न च भोक्ता
गुण इति प्रयोगापत्तिः । पचति गुण इति प्रयोगवदेत-
स्यापि प्रत्ययोपस्थाप्यकृतेः समवायसम्बन्धेनैवान्वयेन
वारणादिति दिक् ।

प्राभाकरास्तु क्रियानुकूलव्यापारो धात्वर्थः । आ-
श्रयत्वमाख्यातार्थः । तथा च तण्डुलं पचतीत्यत्र तण्डुल-
कर्मकक्रियानुकूलव्यापाराश्रय इति बोधः । तन्न । यत्नान-
नुभवप्रसङ्गात् ।

फलं धात्वर्थो व्यापारश्चाख्यातार्थो वृत्तिमत्त्वं
तद्द्वितीयार्थः । तथा च तण्डुलवृत्तिफलानुकूलव्यापारवा-
निति बोधः । एवमन्यत्रापि इति मण्डनमिश्राः ।

संसर्गाभावोऽन्योऽन्याभावश्च नञर्थः । तत्रान्वयि-
तावच्छेदकावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यं
तेन नीलघटवति घटो नास्तीति न प्रयोगः । न वा नीलो
न घट इति प्रयोगः । न च कम्बुग्रीवादिमान्नास्तीत्यत्रान्व-
यितावच्छेदकस्य गुरुतया प्रतियोगितानवच्छेदकत्वान्नेयं

व्युत्पत्तिरिति वाच्यम् । गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वाङ्गीकारादिति केचित् ।

परे तु अन्वयितावच्छेदकसमव्याप्तधर्मावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिसिद्धं कम्बुग्रीवादिमान्नास्तीत्यत्र घटत्वं तादृशम् । अतस्तदवच्छिन्नप्रतियोगिता संसर्गतया भासते इत्याहुः । तन्न । गुणे सत्ता नास्तीति प्रयोगापत्तेः । विशिष्टसत्तात्वस्यान्वयितावच्छेदकसमनियतत्वेन तदवच्छिन्नप्रतियोगिताकाभावस्य गुणे सत्त्वात् ।

यत्तु अन्वयितावच्छेदकसमनियतो यः कश्चिद्धर्मस्तदवच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिसिद्धं वाच्यम् । अन्यथा कम्बुग्रीवादिमत्त्वस्यापि अन्वयितावच्छेदकसमनियतत्वेन दोषतादवस्थ्यात् । तथा चान्वयितावच्छेदकव्यापको यः कश्चित् धर्मः, तदवच्छिन्ना प्रतियोगिता संसर्गलभ्येत्याह । न चोपसर्गवन्नञोऽपि तात्पर्यग्राहकत्वेन द्योतकत्वादु भूतले न घट इत्यादौ घटादिपदानां घटात्यन्ताभावे लक्षणयैव बोधे किमर्थं नञः शक्तिरिति वाच्यम् ।

भूतलं न घट इत्यत्र नामार्थस्यान्योन्याभावस्य भेदेन भूतलादावन्वयात् । अभाववति लक्षणायां भूतलविशेष्यकभेदप्रकारकबोधस्याननुभवप्रसङ्गात् ।

किं च नेदं चैत्रस्येत्यत्र सुब्विभक्तौ लक्षणानङ्गीकारेण चैत्रस्वत्वाभावबोधो न स्यात् । न च सुब्विभक्तेरपि सुविभक्त्यर्थान्तरे लक्षणानङ्गीकारान्नोक्तदोष इति वाच्यम् । प्रातिपदिकस्यापि तद्विशिष्टेऽर्थे लक्षणयैव बोधोपपत्तौ कारकादीनामपि शक्त्यभावापत्तेः ।

षष्ठ्यर्थः स्वत्वं न तु स्वामित्वं तेनेदं चैत्रस्येत्यादौ नञा स्वामित्वस्य निरूपकतासम्बन्धेनाभावो बोधनीय-

स्तस्य वृत्त्यनियामकतया प्रतियोगितावच्छेदकत्वेनाभावाप्रसिद्ध्या बोधासम्भवो निरस्तः। स्वत्वस्य षष्ठ्यर्थत्वेनाऽप्रकृतासम्बन्धेन तस्याभावबोधसम्भवात् ।

एवं जन्यत्वं ज्ञाप्यत्वं अवधिमत्त्वं च पञ्चम्यर्थौ न जनकत्वं ज्ञापकत्वमवधित्वं च ।

एवं सप्तम्यर्थोऽप्याधेयत्वं न स्वाधारत्वमित्यादि द्रष्टव्यम् ।

ननु नञः शक्तिवत् प्रजयतीत्यादौ प्रकर्षजयबोधादुपसर्गेऽपि शक्तिरनिवार्येति चेन्न । उपसर्गस्य नामत्वेन धात्वर्थे तदन्वयासम्भवाद्धातोरेव लक्षणाङ्गीकारात् । न च धातोः प्रकर्षे लक्षणायां जयस्य शक्यत्वेन धात्वर्थे प्रकृष्टनञबोधे युगपद्वृत्तिद्वयविरोधः प्रकृष्टजये लक्षणायां तु तस्य शक्यत्वेन शक्यसम्बन्धरूपलक्षणासम्भव इति वाच्यम् । अभेदोऽपि स्वस्मिन् स्वसम्बन्धस्य सत्त्वाच्छक्यतावच्छेदकान्यरूपेण तद्बोधे लक्षणाङ्गीकारात् । यथा द्रव्यपदस्य घटत्वेन बोधे लक्षणेति दिक् ।

ननु चेष्टाप्रमाणं पृथक् स्वीकरणीयं तथा संख्यादिरूपार्थान्वयबोधस्य सर्वसिद्धत्वात् । कियन्तो घटा इति पृष्टे दशाङ्गुलीप्रदर्शने दशत्वस्य घटे ज्ञानात् । एवं चेष्टाविशेषेण द्रव्यविशेषज्ञानात् मानान्तरस्य तदानीमभावात् सिद्धं प्रमाणान्तरमिति चेन्न । तादृशचेष्टया तदर्थबोधकशब्दानुमानादेवार्थबोधसम्भवान्मानान्तरकल्पने गौरवापत्तेः ।

एवं दिवाभुञ्जानत्वे सति पीनत्वादित्यादिहेतुना रात्रिभोजनानुमानसम्भवेन नार्थापत्तिरपि मानान्तरम् । न च सम्भवोऽपि प्रमाणान्तरं स्वीकार्यं शतं घटाः सन्ति इति

ज्ञानाद्दशत्वज्ञानं जायते नैतदनुमानात्सम्भवति शत-संख्याया दशत्वसङ्ख्याव्यभिचरितत्वादिति वाच्यम् । पर्याप्तिरूपसम्बन्धेन दशत्वसङ्ख्याव्यभिचारितत्वेऽपि समवायेनाव्यभिचरितत्वात् । यद्वा अत्र शतं घटाः स-न्तीत्यवगतेऽयं देशो दशघटवान् शतघटवत्वादित्यादिप्र-कारेणानुमानसम्भवात् ।

ऐतिह्यमप्यविदितकर्तृकः शब्दः प्रमाणं चेच्छब्द-प्रमाणमेव नो चेदप्रमाणमेवेति सिद्धं चत्वार्येव प्रमाणा-नीति ।

ननु प्रमात्वसिद्धौ सर्वमिदं स्यात् । न च तत्प्रत्य-क्षेण शक्यग्रहम् । ज्ञानस्यातीन्द्रियत्वात् । अन्यथा ज्ञानत-ज्ज्ञानादिधारा स्यान्न तु विषयान्तरसंचार इति । स्वप्र-काशमेव ज्ञानं सर्वं घटमहं जानामीत्याकारकं मितिमातृ-मेयविषयकमित्याहुः । तन्न ।

चाक्षुषज्ञाने रूपवत एव द्रव्यस्य योग्यत्वादुत्पद्यमा-नज्ञानस्य पूर्वमसिद्धत्वादसन्निकृष्टत्वाच्च । ज्ञाततया नि-रस्यत्वात्तया ज्ञानानुमानमिति भट्टमतं निरस्तप्रायम्, ज्ञा-नरूपसाध्याप्रसिद्ध्यानुमानासम्भवाच्च । तस्मान्न स्वप्रका-शेन ज्ञाततालिङ्गकानुमित्या वा प्रमात्वग्रहः सम्भवति । किं तु मनसैवेति मुरारिमिश्राः ।

तथा हि ज्ञानं मानसमित्युभयसम्मतं तथा च घट-ज्ञानानन्तरं मनः संयुक्तसमवायेन तज्ज्ञानं जायते तत्र घटत्वविशिष्टस्य पूर्वमुपस्थितत्वेन भानं निर्विवादं घटत्व-वतो ज्ञाने सम्बन्धो घटत्ववद्विशेष्यता सा चानुपस्थिता साचानुसम्बन्धविधया भासते । सम्बन्धस्यानुपस्थितस्य भानमुभयसिद्धम् । अभावत्ववत् प्रकारत्वस्यानुपस्थितस्य भानं तु नैयायिकानामिष्टमेवेति ।

यद्वा घटत्वस्य सम्बन्धमर्यादया प्रकारत्वभानम् । तथा च घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकत्वरूपप्रामाण्यं स्वतस्तत्रा प्रथमानुव्यवसायेन सुग्रहं ज्ञानत्वघटितमपि सुग्रहं ज्ञानत्वस्य योग्यत्वेन भानाङ्गीकारादित्याहुः ।

तन्न । वह्निगुञ्जापुञ्जयोर्गुञ्जाव ह्नीति भ्रमव्यावृत्तं तद्वद्विशेष्यकत्वावच्छिन्नं तत्प्रकारकत्वं तद्वाच्यम् । न चानुपस्थितयोरवच्छेद्यावच्छेदकभावो ग्रहीतुं शक्यः । प्रथमानुव्यवसायेन पूर्वोक्तरीत्या तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोर्ज्ञाने द्वितीयानुव्यवसायेनोपस्थितयोस्तयोः संसर्गविधयाऽवच्छेद्यावच्छेदकभावः शक्यग्रह इति परत एव प्रामाण्यग्रहो न तु स्वतः । तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकग्राह्यत्वस्य तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यत्वस्य यावत्तदनुव्यवसायग्राह्यत्वादिरूपस्य वा स्वतस्त्वस्य सम्भवादेव द्वितीयानुव्यवसायेन गृहीते प्रामाण्ये ज्ञानान्तरेऽनुमानादिनापि ग्रहः सम्भवतीति नाप्रसिद्धसाध्यकानुमानसिध्यर्थं कुसृष्ट्यादरणमिति दिक् ।

कर्मत्वजातिमत्कर्म । तच्चोक्तमेव ।

सामान्यविशेषसमवायाभावाख्याः पदार्था उक्ता एवेति सप्तैव पदार्थाः ।

एवकारस्य नीलं सरोजं भवत्येवेत्यादौ क्रियासङ्गतस्यात्यन्तायोगव्यवच्छेदः शक्यः । शङ्खः पाण्डुर एवेत्यादौ विशेषणसङ्गतस्यायोगव्यवच्छेदः । पार्थ एव धनुर्धर इत्यादौ विशेष्यसङ्गतस्यान्ययोगव्यवच्छेद इति प्राञ्चः ।

नव्यास्तु चैत्रस्यैवायं भ्राता मैत्रस्यैवेदमित्याद्यनुरोधेनान्ययोगव्यवच्छेदबोधस्यावबोधात्तेनैव सर्वत्रोपपत्तौ नायोगव्यवच्छेदादिबोधो एवकारादिति, न तत्र शक्तिः । विस्तरस्त्वस्मत्कृतएवकारवादे द्रष्टव्यः ।

अत्र केचित । स्वत्वं पदार्थान्तरं दुर्वारम् । तद्धि न द्रव्यादित्रयान्तर्गतम् । गुणेऽपि वृत्तेः । न च तद्वृत्तित्वे मानाभावः । अरुणया पिङ्गाक्ष्येत्यत्रारुणगुणस्य क्रयसाधनत्वप्रतीत्या स्वत्वाश्रयस्य क्रयसाधनत्वेन गुणेऽपि तद्वृत्तित्वसिद्धेः । नापि सामान्यादिकम् । उत्पत्तिमत्त्वे सति विनाशित्वात् ।

ननु तत्र मानाभावः । तथा हि । स्वत्वाश्रयस्य प्रत्यक्षत्वेऽपि तत्सत्त्वस्य संशयभ्रमयोर्जायमानत्वेन तस्येन्द्रियाग्राह्यत्वात् । न च प्रतिग्रहादिज्ञानसहकृतेन्द्रियग्राह्यम् । स्वत्वजनकज्ञानविशेषस्य प्रतिग्रहपदार्थत्वेनान्योन्याश्रयापत्तेः । न च प्रतिग्रहादिक्रिया कर्तृकर्मसम्बन्धजनिका कर्तृकर्मनिरूप्यक्रियात्वात् गमनक्रियावत् । अस्तिक्रियायां ध्वंसप्रागभावानवच्छिन्नसत्त्वप्रतिपादिकायां कर्तृनिरूप्यायां कर्मशून्यायां कर्मसम्बन्धजनिकायां व्यभिचार इति कर्मपदम् । घटं जानातीत्यत्र विषयरूपकर्मनिरूप्यायां व्यभिचारवारणाय कर्तृपदम् । ज्ञानरूपक्रिया तु न कर्तृनिरूप्येति तद्वारणाय विगीतत्वं क्रियाविशेषणम् । तेन चौर्यादिक्रियायां न व्यभिचारः । न च गमनक्रियाया दृष्टान्तत्वात् सम्भवः । उत्तरसंयोगावच्छिन्नस्य पदस्य तदर्थत्वेन संयोगस्य द्विष्ठतयोभयनिरूप्यत्वेन दृष्टान्तत्वसम्भवादनुमानात्तत्सिद्धिरिति वाच्यम् । ग्रामं त्यजतीत्यादौ त्यागक्रियायां व्यभिचारादप्रयोजकत्वाच्च ।

एतेन क्रिया कर्तृकर्मनिष्ठधर्मजनिका फलावच्छिन्नत्वेन धातुप्रतिपाद्यत्वादिति परास्तम् । स्वरूपासिद्धेः सत्त्वासिद्धौ स्वत्वजनकज्ञानस्य धातुवाच्यत्वासिद्ध्याऽसिद्धेः । न चार्जितेषु नानाविधेषु स्वं स्वमित्यनुगतधर्मसिद्धिरिति वाच्यम् । अक्षादिशब्दप्रयोगेणापि अनुगत-

धर्मसिद्ध्यापत्तेः । अर्थे प्रतिग्रहानन्तरं यथेष्टविनियोगदर्शनात्तयोः कार्यकारणभावः । न च कालान्तरभावियथेष्टविनियोगं प्रत्याशुविनाशिनः प्रतिग्रहस्य द्वारं विना कारणत्वं सम्भवतीति द्वारत्वेन स्वत्वसिद्धिः । तच्च प्रतिग्रहादिना जन्यते दानादिना न नश्यति तच्च स्वधननिष्ठं स्वामिनिरूप्यम् ।

ननु इदं ममेति ज्ञानरूपप्रतिग्रहस्य स्वत्वजनकत्वे परकीयद्रव्येऽपि ममेदमिति ज्ञानात् स्वत्वापत्तिः । न च स्वत्वं प्रति स्वत्वस्य प्रतिबन्धकत्वात्परकीयद्रव्ये परस्य स्वस्वत्वसत्त्वान्नान्यस्य स्वत्वोत्पत्तिरिति वाच्यम् । देवदत्तस्येदं न मम किं तु यज्ञदत्तस्येति ज्ञानाद्देवदत्तस्वत्वनाशे इदं ममेति यज्ञदत्तातिरिक्तज्ञानाद्यज्ञदत्तातिरिक्तस्यापि तत्र स्वत्वोत्पादापत्तेः । न च देवदत्तस्य नेदं मम किं तु यज्ञदत्तस्येति ज्ञानविषयतया विशेषेण स्वत्वोत्पादकं तदभावान्न यज्ञदत्तातिरिक्तस्वत्वोत्पत्तिरिति वाच्यम् । देवदत्तस्य स्वत्वाभाववति देवदत्तस्य तादृशज्ञानात् स्वत्वोत्पादापत्तेरिति चेन्न । स्वत्वं प्रति स्वत्वस्य प्रतिबन्धकादेव तत्र स्वत्वानुत्पत्तेः । ज्ञानद्वयस्य तत्र कारणात् । नाशकं तु स्वत्वे इदं न ममेति ज्ञानम् । न च परकीयद्रव्येऽपि यज्ञदत्तस्य न ममेति ज्ञानात्स्वत्वनिवृत्त्यापत्तिः । यज्ञदत्तस्वत्वस्यापि द्रव्यनिष्ठसम्बन्धविशेषेण यज्ञदत्तस्वत्वनाशे तदीयज्ञानवद्धेतुत्वादिति चेन्न । चौर्याद्यनन्तरं यथेष्टविनियोगात्तत्रापि द्वारत्वेन स्वत्वकल्पनापत्तेः । किं च स्वत्वस्य स्वरूपसतस्तादृशविनियोगहेतुत्वे ममेदमर्जितमिति ज्ञानाभावेऽपि तादृशविनियोगापत्तेस्तादृशज्ञानसहितस्य तस्य तद्धेतुत्वे लाघवात्ताद-

शज्ञानस्यैव तद्धेतुत्वमस्तु किं तेन । अपि च यथेष्टविनियोगस्येष्टसाधनताज्ञानाधीनत्वेन स्वत्वानपेक्षणाच्च ।

ननु कथं तर्हि स्वत्वव्यवहारः प्रतिग्रहादिविषयत्वेनेति चेन्न । विषयत्वस्य विषयस्वरूपतया दत्तेऽपि स्वत्वव्यवहारापत्तेः । प्रतिग्रहरूपत्वे च तन्नाशकाले स्वत्वाभावापत्तेः । किं च पितृमरणस्य निर्विषयतया तद्विषयत्वासम्भवेन धनेषु स्वत्वव्यवहाराभावापत्तेः । मरणकालीनपुत्रज्ञानविषयत्वेन तद्व्यवहार इति चेन्न । पुत्राज्ञातसुवर्णादिविनियोगेनोदासीनस्य प्रत्यवायो न स्यात्, दानात्फलं च स्यादिति चेन्न । यादृशोपायव्यतिरेके विनियोगासम्भवस्तादृशोपायसमानकालीनाः शास्त्रादिविरुद्धानां तादृशोपायविरोध्युपायानां यावन्तोभावास्तावदभावविशिष्टशास्त्राविरुद्धतादृशोपायसमयोत्तरवृत्तित्वविशिष्टत्वेनैव स्वत्वव्यवहारसम्भवात् । उपायद्वये शास्त्राविरोधित्वविशेषणान्न चौर्योपात्तचौर्यानीतयोः स्वत्वतदभावो येन रूपेण विनियोगोपायता तेन रूपेण शास्त्रानिषिद्धत्वं वक्तव्यम् । तेन कृष्या ब्राह्मणनिषिद्धप्रतिग्रहाब्राह्मणार्जितेन च स्वत्वाभावः । कृषित्वेन प्रतिग्रहत्वेन विनियोगोपाये न निषिद्धता किं तु ब्राह्मणकृषित्वेन तत्तत्प्रतिग्रहत्वेनेति ।

अत्र केचित् । उत्तरकालीनविनियोगस्य विनियोगेच्छाकारणसत्त्वे स्वीये परकीये च दर्शनेन तत्क्रियादेरकिंचित्करत्वात् । स्वत्वाप्रतीतौ शास्त्रनिषिद्धत्वस्याप्यज्ञानाच्च । तस्मात्स्वत्वं पदार्थान्तरम् । प्रमाणं तु परस्वं नाददीतेत्यादिशास्त्रम् । तच्च प्रतिग्रहादिना जन्यते दानादिना नश्यति तच्च क्रयात्पितृमरणाच्च सर्वेषामुत्पद्यते पितृमरणोत्तर-

मुत्पन्नसुतस्य पैतृके स्वत्वं पितृमरणादेव परं तु पुत्राभावविशिष्टभर्तृमरणस्य स्त्रीस्वत्त्वकारणत्वकल्पनात् पुत्रानुत्पादसमयेऽपि मातुः स्वत्त्वमुत्पद्यतेऽन्यथोदासीनस्तद्विनियोगान्न प्रत्यवेयात् ,पुत्रजन्मना च तत्स्वत्वं नश्यति गर्भस्थस्यापि पुत्रस्य पितृमरणादुत्पद्यते ।

एवं प्रतिग्रहादिलभ्यभूम्यामुत्पन्नधान्यादौ स्वत्वं तदीयस्वत्वादुत्पद्यते क्रयादिगृहीतदुग्धादिजन्यदध्यादौ स्वत्त्वं च दुग्धपरमाणुस्वत्त्वेन जन्यम् । न च तज्जनिते स्वत्वोत्पादस्तत्सत्त्वेन चेत्तर्हि कालान्तरे त्वद्दुग्धपरमाणुजनितद्रव्यान्तरे ऽपि तत्स्वत्वापत्तिरिति वाच्यम् । परमाणुस्वत्त्वस्य स्वजन्यस्वत्त्वेन नाशाङ्गीकारात् । अत एव प्रोक्षणादिजन्यसंस्कारवदात्मनिष्ठं स्वत्वमिति परास्तम् । क्रीततन्तुभिः पटोत्पादने स्वत्वाभावापत्तेः । तदवयवे स्वत्वाभावात् । दशभ्रातॄणां धननिरूपितदशत्वस्वीकारापेक्षया दशनिरूपितमेकमेव धने स्वत्त्वमिति लाघवाच्च । न च दशसु धनेषु एकस्य तव दशस्वत्त्वानि न तु दशधनानामेकमेव स्वामित्वमिति लाघवमिति वाच्यम् । तत्र तवापि दशस्वत्त्वस्वीकारात् । अन्यथा एकस्य दानेन स्वत्त्वनाशे ऽन्येषु अपि स्वत्त्वाभावप्रसङ्गत् । न च दशभ्रातृकस्थले एकस्य नाशात्तत्स्वत्वनाशे भ्रात्रन्तराणां तत्र स्वात्त्वाभावापत्त्या तत्रापि नानास्वत्वस्वीकारो दुर्वार इति वाच्यम् । चरमभ्रातृनाशस्यैव तत्स्वत्वनाशे हेतुत्वात् । न च तत्पुत्रस्य तत्र स्वत्त्वानुपपत्तिप्रसङ्गः । तत्स्वत्वं प्रति तत्स्वत्त्वस्य विरोधित्वेन सत्यपि तत्स्वत्वे पितृमरणात्तदुत्पत्तेः । तव ज्ञानादिरूपोपायस्य समवायेन हेतुत्वं मम तु विषयतयेति दिक् ।

दशभ्रातृषु तद्धननिरूपितमेकमेव वास्तु । यथा दशनिरूपितमेकं धने स्वत्वमिति केचित् । प्रमाणप्रमेयादीनामत्रैवान्तर्भावात्, शक्तिसादृश्यादीनामतिरिक्तत्वनिरासाच्च सप्तैव पदार्थाः ।

इति धारापुरनिवासिलक्ष्मणदेवात्मजमाधवदेवविरचितो

न्यायसारः समाप्तः ।

शुभम् ।

